

श्रीमद्विद्यारण्यस्वामिविरचितः

# अनुभूतिप्रकाशः

तृतीयावृत्तिः










मुम्बय्याम्

पाण्डुरङ्ग जावजीश्रेष्ठिना

स्वीये निर्णयसागराख्यमुद्रणयन्त्रालयेऽङ्कयित्वा प्रकाशितः ।

शाकः १८४८, सन १९२६



मूल्यं ० रूप्यकः



श्रीः ।

# अनुभूतिप्रकाशः ।

श्रीगणेशाय नमः ॥ अथ श्रीविद्यारण्यविरचित उपनिषत्तात्पर्यरूपोऽनुभूतिप्रकाशः प्रारभ्यते ॥ हरिः ॐ ॥ ऐतरेयेण संप्रोक्ता द्वितीयारण्यकांतगा ॥ ब्रह्मविद्या सुविस्पष्टं बालबोधाय तन्यते ॥१॥ आत्मैव सृष्टेः प्रागासीन्नामरूपविवर्जितः ॥ सोऽप्येक एव नान्योऽस्ति जडं चान्यन्न विद्यते ॥२॥ मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ॥ इति श्रुत्यंतरे प्रोक्ता माया नान्यत्र तत्त्वतः ॥३॥ निस्तत्त्वं व्यवहारार्हमनृतं बालयक्षवत् ॥ बालो यक्षं प्रकल्प्यास्माद्बिभेति व्याघ्रतो यथा ॥४॥ वस्तुतत्त्वं जडं किंचिन्नान्यदस्त्यात्मवस्तुनः ॥ अद्वयानंदरूपात्मा तदा सुप्ताविव स्थितः ॥५॥ निस्तत्त्वापि जगद्भ्रांतिं माया निद्रेव कल्पयेत् ॥ निर्विकारोऽप्यसावात्मा मायावृत्त्या व्यचारयत् ॥६॥ स विचार्याखिलान् लोकान् सृष्ट्वा पालकसृष्टये ॥ कृत्वा विराट्तनुं छिद्रेष्वथ तद्देवता व्यधात् ॥७॥ समुद्रतुल्ये देहेऽस्मिन् देवताः पतितास्तथा ॥ तं देहं क्षुत्पिपासाभ्यां योजयामास स प्रभुः ॥८॥ अन्नसोग्ययात्मदेहान् गवाश्वपुरुषादिकान् ॥ सृष्ट्वा प्रावेशयत्तत्र देवतास्ता यथायथम् ॥९॥ ईशोऽसाधारणं स्थानमपश्यन् क्षुत्पिपासयोः ॥ प्रावेशयद्देवतासु तद्भोगात्ते च तृप्यतः ॥१०॥ अन्नं सृष्टे भोक्तृवर्गो ह्यजिघृक्षत्तदिं-

---

१ एतन्नायकेन मुनिना ।

द्रियैः ॥ तत्र वागादयोऽशक्तास्तदपानो गृहीतवान् ॥११॥ जीवाभावे वृथा सर्वमित्यालोच्य परेश्वरः ॥ शिरोमध्यं विदार्यात्र प्राविशज्जीवरूपतः ॥१२॥ प्राणानां धारकः कर्ता चेतनो जीव उच्यते ॥ ज्ञानखाग्रमहंकारश्चिद्व्याप्तश्चेतनोऽभवत् ॥ १३ ॥ अंतःकरणभागौ द्वावहंकारो मनस्तथा ॥ वृक्षस्य मूलमग्रं च यथाभागौ तथेक्ष्यताम् ॥१४॥ चिद्बिंबप्रतिबिंबाभ्यां युक्तोऽहंकार एव तु ॥ चेतना प्राणभृत्तस्य हृन्निष्ठं करणं मनः ॥१५॥ तस्य हृत्कंठनेत्रेषु प्रचारवशतोऽभवत् ॥ सुप्तिः स्वप्नो जागरश्च सोऽयं संसार ईरितः ॥१६॥ स्वप्नः सकाल एवास्ति नान्यदा स्वप्नजागरौ ॥ तथैवेति स्वप्नसाम्यात्त्रयः स्वप्ना उदीरिताः ॥१७॥ अध्यारोपो मायिकोऽयमुक्तोऽथासावपोह्यते ॥ अध्यारोपापवादाभ्यां निष्प्रपंचं प्रपंच्यते ॥१८॥ स संसारीश्वरो जात ईश्वरानुग्रहात्पुनः ॥ पृथिव्यादीनि भूतानि यथाशास्त्रं व्यचारयत् ॥ १९ ॥ परमात्मन उत्पन्नं जगदात्मैव नेतरत् ॥ मृदो जातो घटो यद्वन्मृद्वस्त्वेव तथेक्ष्यताम् ॥२०॥ घटः शराव इत्यादिविकाराणां मृदः पृथक् ॥ तत्त्वं नास्ति प्रतीते तु नामरूपे प्रकल्पिते ॥२१॥ प्रतिबिंबभ्रमो नीराद्युपाधिवशतो यथा ॥ सन्निवेशोपाधितोऽयं[1] तथा कुंभादिविभ्रमः ॥२२॥ भ्रांतिः सोपाधिकोपाधिनिवृत्त्यैव निवर्तते ॥ न बोधात्तेन भासंते जानतोऽपि घटादयः ॥२३॥ पृथग्द्रव्यस्वरूपः सन्समवेतो घटो मृदि ॥ इत्याहुस्तार्किकास्तत्तु न द्वैगुण्यप्रसंगतः ॥ २४॥ मृद्भाराद्धटभाराच्च गुरुत्वं द्विगुणं भवेत् ॥ तथालंकारकर्ता स्यात्कृती हेमादिवृद्धतः ॥२५॥ न सन्निवेशमात्रेण पृथग्द्रव्यत्वसंभवः ॥

---

१ आकारविशेषः ।

शयनोत्थानगमनैर्न पुत्रे बहुपुत्रता ॥२६॥ तस्मात्कार्यं न वस्तु स्यात्कारणव्यतिरेकतः ॥ किंतु कारण एवैतदनृतं भासते मृषा ॥२७॥ अर्थक्रियानृतेऽप्यस्ति स्थाणौ चोरभयेक्षणात् ॥ ततोऽनृता घटाद्याः स्युर्भांतु कुर्वंतु वा क्रियाम् ॥२८॥ सन्निवेशोपाधिहाने गच्छत्येव घटादिधीः ॥ विवेकिनां तु वस्तुत्वं घटादीनां निवर्तते॥२९॥ घटः शराव इत्येवं वाचैवारभ्यते वृथा ॥ मृत्तिकेत्येव सत्यं स्यान्न तु सत्यं घटादिकम् ॥३०॥ एवमात्मन उत्पन्नं पृथिव्याद्यपि नात्मनः ॥ पृथगवस्त्वस्ति किंत्वात्मन्यारोपात्प्रतिभासते ॥३१॥ सद्वस्तु ह्यात्मनस्तत्त्वं तस्मिन् भूम्यादिकल्पनात् ॥ पृथिव्यादीनि संतीति भासते तत्तदिंद्रियैः ॥ ३२ ॥ इंद्रियोपाधिका भ्रांतिरक्षरोधान्न भासते ॥ इत्येतद्विशदीकर्तुं योगो वेदेषु वर्ण्यते ॥३३॥ सदात्मनः पृथग्भूतमसद्भूम्यादि तेन तत् ॥ भात्वक्षैः कार्यकृद्वस्तु मिथ्यैव स्याद्घटादिवत् ॥३४॥ ईदृग्विवेकदृष्ट्येदं जगदात्मैव नेतरत् ॥ एवं सत्यात्मनोन्यत्किं वस्तुमस्तीति शंक्यते ॥३५॥ अद्वयानंदरूपात्मा सृष्टेः पूर्वमभूद्यथा ॥ तथैवाद्यापि संपन्नो बुद्ध्या सम्यग्विवेचितः ॥३६॥ इत्थं सर्वात्मकं ब्रह्म विविच्य पुनरप्यसौ ॥ एतमेव स्वमात्मानं ब्रह्मत्वेन व्यलोकयत् ॥३७॥ अहंकारश्च चिच्छाया मिथ्या भूम्यादिवत्ततः ॥ चिदात्मकोऽवशिष्टोऽयं जीवो ब्रह्मैव नेतरः ॥३८॥ यथाशास्त्रं विविच्येत्थं प्रत्यग्दृष्ट्या चिदात्मनः ॥ साक्षाच्चकार ब्रह्मत्वं जीवः शांत्यादिसंयुतः ॥३९॥ इदमित्यपरोक्षेण ददर्शेति विवक्षया ॥ इदंद्रनामाभूज्ज्ञानी वैयाकरणदृष्टितः ॥४०॥ तमिंद्र[1] इत्याहुरन्ये नाम्नः पारोक्ष्यसिद्धये ॥ पूज्यस्य देवपित्रादेः परोक्षं

[1] तमिदंद्रम् ।

नाम हि प्रियम् ॥४१॥ परमेश्वररूपत्वादपींद्रत्वमिहोचितम् ॥ समाप्ता ब्रह्मविद्येयमुत्तमस्याधिकारिणः ॥ ४२ ॥ विरक्तस्योक्तबोधः स्याद्वैराग्यं दोषदर्शनात् ॥ जन्मैव प्रथमो दोषस्तद्बीभत्सा निरूप्यते ॥ ४३ ॥ स्वर्गाद्वा नरकाद्वायं वृष्टिद्वाराऽन्नसंस्थितः ॥ प्रविश्य पितरं तत्र गर्भो भवति रेतसि ॥ ४४ ॥ तद्रेतः पितृदेहस्थं सर्वांगेभ्यः समुत्थितम् ॥ पितुः स्वदेहो गर्भाख्यदेहश्चेति वपुर्द्वयम् ॥ ४५ ॥ स्त्रियां सिंचति तद्रेतस्तत्पुत्रोत्पादनं पितुः ॥ पुत्ररूपेण तज्जन्म पितुराद्यं स्वयं कृतम् ॥४६॥ योषिद्योनिं प्रविश्यायं योषिद्गर्भे स्फुटीभवेत् ॥ योषिद्वीर्येण पुष्टोऽसौ तद्देहेनैकतां व्रजेत् ॥४७॥ अन्यथैनां स्त्रियं हन्याद्गुल्मव्याधिवदांतरः ॥ स्वांगवन्न हिनस्त्येनां गर्भं रक्षति सा ततः ॥ ४८ ॥ गर्भरूपं भर्तृदेहं यतः सा पालयत्यतः ॥ सापि भर्त्रा पालनीया तदिष्टान्नादिवस्तुभिः ॥४९॥ गर्भो विण्मूत्रयोः स्थित्वा दशमे मासि जायते ॥ पिता स्वात्मधिया पुत्रं संस्करोति यथाविधि ॥ ५० ॥ पितुर्द्वितीयं तज्जन्म पुत्ररूपेण संस्थितम् ॥ स्वोदराद्दारजठरादपि जन्मद्वयं क्रमात् ॥५१॥ पतिर्जायां विशत्यादौ गर्भो भूत्वा स्वमातरम् ॥ जायैव माता संपन्नेत्यहो संसारकष्टता ॥ ५२ ॥ लौकिकं वैदिकं सर्वं पुत्रेऽवस्थाप्य तत्पिता ॥ मृतो देहांतरे पित्रोरन्ययोर्विशति स्वयम् ॥५३॥ पुत्ररूपेण यज्जन्मद्वयं पूर्वमुदीरितम् ॥ तदपेक्षं तृतीयं तज्जन्म स्याद्देहधारिणः ॥५४॥ स्वोदरं दारजठरं तथा पित्रंतरोदरम् ॥ त्रय आवसथा इत्थं जंतोः सर्वस्य जन्मने ॥५५॥ जन्मानि योनिलक्षाणां जंतुश्चतुरशीतिषु ॥ उत्तमाधमरूपाणि प्राप्नोत्येवं पुनः पुनः ॥५६॥

---

१ गर्भः ।

दुष्टत्वं जन्मनः प्रोक्तं स्पष्टं रोगादिदुष्टता ॥ विरक्तो बुद्धतत्त्वस्तु मुच्यते वामदेववत् ॥५७॥ पूर्वजन्मनि बोधेन स्वमुक्तिं चाब्रवीदृचा ॥ गर्भस्थो वामदेवोऽयं प्रतिबंधविवर्जितः ॥५८॥ जन्मन्यतीते वेदांतं श्रुत्वाप्येष न बुद्धवान् ॥ बलिना प्रतिबद्धत्वात्कर्मणा जन्महेतुना ॥५९॥ गर्भे प्रविश्य तत्कर्म विनष्टं प्रतिबंधकम् ॥ नवमे मासि संस्मृत्य श्रवणं प्रतिबुद्धवान् ॥६०॥ विद्वान्भूत्वा समुत्पन्नो जीवन्मुक्तोऽभवेत्तदा ॥ शरीरमात्मनो भिन्नं मिथ्यैवेत्यवगच्छति ॥६१॥ इयंतं कालमेतस्मिन्भ्रांत्या देहे निमग्नवान् ॥ बोधेन देहादुत्क्रम्योत्क्रुष्टोऽभूज्जीवतां त्यजन् ॥ ६२ ॥ जीवत्वेऽपगते तस्य शिष्यते परमात्मता ॥ स एव स्वर्गतुल्योऽभूदिंद्रियाविषयत्वतः ॥६३॥ परोक्षोऽपि विमूढानां विद्वद्भिरवलोक्यते ॥ सर्वेऽपि विषयानंदाः प्राप्ता दृष्टे निजात्मनि ॥६४॥ आत्मानंदसमुद्रस्य विप्रुषो[1] विषयोत्थिताः ॥ आत्मन्यंतर्भवंत्यंते समुद्रे बिंदवो यथा ॥६५॥ आत्मन्यानंदमज्ञात्वा विषयेषु स्वविभ्रमात् ॥ बाह्यमिच्छति तल्लाभाद्धीरात्मन्युपशाम्यति ॥६६॥ आत्मानंदं क्षणं भुक्त्वा पुनर्भ्रांत्या बहिर्व्रजेत् ॥ विवेकिधीर्निजानंदं भुंक्ते तत्स्थैव सर्वदा ॥ ६७ ॥ विषये दुःखजातं यत्तद्वीक्ष्यापक्षपाततः ॥ शक्यो बोद्धुं निजानंदो बुद्ध्यंते हि विवेकिनः ॥६८॥ वामदेवोऽखिलानंदानाप्यात्मन्यमृतोऽभवत् ॥ देहप्राणवियोगाख्या मृतिश्चिद्वस्तुनो नहि ॥६९॥ इत्थं संसारदुष्टत्वं पुरुषार्थं च बोधतः ॥ श्रुत्वा विरक्ता बोधार्थं मीमांसंते मुमुक्षवः ॥७०॥ अहं पश्याम्यहं वच्मीत्यात्मानं सर्वदा वयम् ॥ उपास्महे योगिवंद्यं कोऽसौ मूर्ध्नि प्रविष्टवान् ॥७१॥ मायावी

---

[1] बिंदवः ।

शुद्धचिद्वात्मा कतरः सृष्टितः पुरा ॥ बुभुत्संते द्वयोस्तत्त्वं जीवात्मपरमात्मनोः ॥७२॥ जीवस्य चेतनत्वेन चैतन्यं चिंत्यतामिदम् ॥ चक्षुरादिविशिष्टं तच्छुद्धं वा तत्त्वमस्य किम् ॥७३॥ चक्षुःश्रोत्रे घ्राणजिह्वे त्वक्क धींद्रियपंचकम् ॥ रूपशब्दौ गंधरसौ स्पर्शश्च विषयाः क्रमात् ॥७४॥ वाक्पाणिपादपायूपस्थाः कर्मेंद्रियपंचकम् ॥ भाषणादानगमनविसर्गानंदकाः क्रियाः ॥७५॥ गोलकानि दृशैतेषामक्ष्यादीनि स्फुटानि हि ॥ ज्ञानक्रियाशक्तिरूपमिंद्रिय गोलकस्थितम् ॥७६॥ प्राणोऽपानः समानश्चोदानव्यानौ च वायवः ॥ हृद्गुदे नाभिकंठौ च देहश्चैषु वसंति ते ॥७७॥ श्वासाधोगतिवृत्ती द्वे वपुष्यन्नसमीकृतिः ॥ उद्गारादिर्देहबलं पंच वायुक्रिया इमाः ॥७८॥ अहं कर्ता वपुर्व्याप्य जडं चेतनतां नयेत् ॥ मनोंतर्हृद्यवस्थाय वृत्तीः कामादिकाः सृजेत् ॥७९॥ ज्ञानेंद्रियाणि पंचात्र तथा कर्मेंद्रियाण्यपि ॥ वायवः पंच कर्ता च मनः सप्तदशं स्मृतम् ॥८०॥ सोऽयं सप्तदशस्तोमो लिंगदेहः स्वयोनिषु ॥ सर्वासु संसरत्यस्य विनाशो मोक्ष उच्यते ॥८१॥ अज्ञानकल्पितो देहस्तत्त्वज्ञानेन नश्यति ॥ ज्ञानोत्पत्तिर्विचारेण तस्मादात्मा विचार्यते ॥८२॥ येन पश्यत्यसावात्मा यः पश्यति स वा भवेत् ॥ द्रष्टा पश्यति बोधेन चाक्षुषेण तयोस्तु कः ॥८३॥ शृणोति येन यः श्रोता तयोरित्यादि योज्यताम् ॥ चैतन्यमस्ति करणे कर्तरीत्यत्र चिंत्यते ॥८४॥ बहूनि करणान्येषु बोधा दृष्ट्यादिनामकाः ॥ बहवः कर्तृबाहुल्यमपि द्रष्ट्रादिभेदतः ॥८५॥ करणानां च कर्तृणां भेदः स्याच्चक्षुरादिके ॥ बाह्ये यथा तथैवांतःशरीरेऽप्यवगम्यताम् ॥८६॥ कर्त्रुपाधिरहंकारो वाच्यो हृदयशब्दतः ॥ करणं स्यान्मनस्तस्य संज्ञानाद्यास्तु वृत्तयः ॥८७॥

तत्र सर्वत्र चैतन्यं लक्ष्यते हि पृथक् पृथक् ॥ एवं सति बहुष्वेषु कः स्यादात्मेति संशयः ॥८८॥ प्रज्ञानमेकं सर्वेषु यत्स आत्मेति निर्णयः ॥ प्रकृष्टं निरुपाधित्वाच्चैतन्यं यत्तदीक्ष्यताम् ॥८९॥ अहंकारो मनो बाह्यं करणं चाप्युपाधयः ॥ तेषु सर्वेषु चिच्छाया संक्रांता चेतनाऽन्यतः ॥९०॥ न मुख्यं तेषु चैतन्यमात्मत्वस्याप्यमुख्यता ॥ सुषुप्तौ तानि लुप्यंते नत्वात्मा तत्र लुप्यते ॥९१॥ प्रज्ञानं निरुपाधित्वान्नित्यं तल्लोपभासकम् ॥ प्रज्ञानस्यात्मता तस्मान्मुख्या नान्यस्य कस्यचित् ॥९२॥ द्रष्ट्राद्या अपि दृष्टाद्याः शब्दा मुख्यात्मवस्तुनः ॥ नामान्युपाधिमालंब्य तस्मादात्मोपलक्षकाः ॥९३॥ यथैकस्यैव संबंधविशेषोपाधिनाखिलाः ॥ पुत्रभ्रात्रादयः शब्दा नामत्वेनोपलक्षकाः ॥९४॥ उपलक्ष्यं तु हस्तादिमुक्तमेकं वपुस्तथा ॥ चेतनैः कर्तृकरणैः प्रज्ञानमुपलक्ष्यते ॥९५॥ प्रज्ञानं कर्तृदेहादिसाक्षिभूतं यदस्ति तत् ॥ जीवस्य वास्तवं रूपमित्येवं निर्णयो भवेत् ॥९६॥ प्रज्ञानं स्वशरीरेऽस्ति तथा देहांतरेष्वपि ॥ ब्रह्मादिस्थावरांतेषु तस्य स्यात्परमात्मता ॥९७॥ प्रज्ञानस्यास्य जीवत्वं प्राणधारणतो यथा ॥ जगत्सृष्ट्यादिहेतुत्वाद्ब्रह्मत्वं च तथेष्यताम् ॥९८॥ स्थावरं जंगमं सर्वं जगदित्यभिधीयते ॥ तस्य प्रज्ञैव नेत्रं स्यात् सृष्ट्यादिनयंनादसौ ॥९९॥ प्रज्ञानं शुद्धचिद्रूपमासीद्यत्सृष्टितः पुरा ॥ तस्मिन् प्रतिष्ठितं सर्वं माययोत्पादितत्वतः ॥१००॥ उत्पत्तिस्थितिकालेऽसौ लोकः प्रज्ञाननेत्रकः ॥ नेत्रत्वं व्यवहारस्य सुखादेर्नयनाद्भवेत् ॥१॥ लये प्रज्ञा प्रतिष्ठा स्यात्तत्र सर्वस्य संहृतेः ॥ सृष्टिस्थितिलया इत्थं श्रुताः प्रज्ञानहेतुकाः ॥२॥ स्वप्नसृष्टिस्थितिलया जीव-

१ प्रेरणात् ।

चैतन्यसाक्षिकाः ॥ निर्जीवस्तंभकुड्यादौ स्वप्नसृष्ट्यादयो नहि ॥३॥ जगत्सृष्टिस्थितिलया ब्रह्मचैतन्यसाक्षिकाः ॥ ब्रह्मचैतन्यरहिते वंध्यापुत्रे न संति ते ॥४॥ जगत्सृष्ट्याद्यधिष्ठानं शुद्धचैतन्यमद्वयम् ॥ परमात्मस्वरूपं स्यादिति तस्यात्र निर्णयः ॥५॥ यत्प्रज्ञानं स्वात्मरूपं तद्ब्रह्मेति विबुध्यताम् ॥ प्रज्ञानं ब्रह्म विज्ञाय तिष्ठेत्प्रज्ञात्मना सदा ॥६॥ जीवन्नेव स्थितप्रज्ञो मुक्तः स्याद्वामदेववत् ॥ म्रियतां यत्र तत्रास्य वपुः सोयं न जायते ॥७॥ ऐतरेयब्रह्मविद्यां व्याख्यातां संग्रहादिमाम् ॥ सुस्थिरामनुगृह्णातु विद्यातीर्थमहेश्वरः ॥१०८॥ इति श्रीविद्यारण्यमुनिकृते अनुभूतिप्रकाशे ऐतरेयोपनिषद्विवरणो नाम प्रथमोऽध्यायः ॥१॥

ब्रह्मवल्यां ब्रह्मविद्यां [1]तित्तिरिः प्राह यामिमाम् ॥ वक्ष्ये सुखावबोधाय क्रीडंत्वत्र मुमुक्षवः ॥१॥ दर्शादिपितृमेधांतैः कर्मभिर्बहुजन्मसु ॥ अनुष्ठितैर्विविदिषा जायतेंऽतिमजन्मनि ॥२॥ ततो योगं समभ्यस्य संहितोपासनादिभिः ॥ एकाग्रे साधितेऽथास्य विद्यां सूत्रयति श्रुतिः ॥३॥ सूत्रात्पूर्वं शांतिमंत्रो जपायात्रोपवर्णितः ॥ जपेन विघ्ना द्वेषाद्याः शम्यंति मनसि स्थिताः ॥४॥ ब्रह्म[2]वित् परमेतीति सूत्रं सर्वार्थसूचनात् ॥ ज्ञेयं ज्ञानं फलं चेति सर्वेऽर्थाः सूचिता इह ॥५॥ ज्ञेयं ब्रह्म तदीया धीर्ज्ञानं स्याद्ब्रह्मता फलम् ॥ सूत्रव्याख्यानरूपायामृच्येतद्विशदीकृतम् ॥६॥ ज्ञातव्यं ब्रह्म यत्तत्किमिति चेत्तस्य लक्षणम् ॥ सत्यं ज्ञानं[3]मनंतं यत्तद्ब्रह्मेत्यवगम्यताम्

---

१ यजुःशाखाप्रवर्तकः । २ ब्रह्मविदाप्नोति परम् । ३ तदेषाभ्युक्ता । सत्यं ज्ञानमनंतं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चितेति ।

॥७॥ आकाशादि जगत्सर्वमनृतं मायिकत्वतः ॥ नानृतं ब्रह्म तेनैतत्सत्यमित्यभिधीयते ॥८॥ जगज्जडं स्वतःस्फूर्तिराहित्याद्ब्रह्म तु स्वयम् ॥ स्फुरतीत्यजडं तेन ज्ञानमित्यभिधीयते ॥९॥ जडं घटाद्यं-तवत्स्याद्देशकालादिवस्तुभिः ॥ न देशादिकृतोऽतोऽस्य ब्रह्मानंतं ततः स्मृतम् ॥१०॥ देशकालाद्यन्यवस्तुत्रयं मायाविजृंभितम् ॥ ब्रह्म सत्यं मायिकैस्तैः परिच्छिन्नं कथं भवेत् ॥११॥ जडानृत-परिच्छिन्नव्यावृत्त्यैव पदत्रयम् ॥ लक्षकं स्यादखंडस्य यत्तद्ब्रह्मेति बुध्यताम् ॥ १२ ॥ तादृग्ब्रह्म कथं विद्यादिति चेदभिधीयते ॥ गुहायां परमे व्योम्नि स्थितं ब्रह्म तु वेद यः ॥१३॥ देहादभ्यन्तरं प्राणः प्राणादभ्यंतरं मनः॥ ततः कर्ता ततो भोक्ता गुहा सेयं परंपरा ॥१४॥ पंचकोशगुहायां यदज्ञानं कारणं स्थितम् ॥ तद्व्योम परमं तस्मि-न्निगूढं ब्रह्म तिष्ठति ॥१५॥ जीवे चैतन्यमेवात्र निगूढमिति चेत्तदा॥ तस्यैव ब्रह्मतां विद्याज्जीवत्वभ्रांतिहानये ॥१६॥ स्वतो ब्रह्मैव चैतन्यं जीवत्वं प्राणधारणात् ॥ कोशतादात्म्यविभ्रांत्या भात्यस्य प्राणधा-रणम् ॥१७॥ वक्ष्यमाणविवेकेन तत्तादात्म्यमपोह्यते ॥ ब्रह्मसाक्षा-त्कृतिस्त्वीदृग्बोधेनैव न चान्यथा ॥१८॥ बाह्यं जगत्पंचकोशांश्चा-पोह्यांतर्मुखास्य धीः ॥ ब्रह्म साक्षात्कारोत्येव सर्वोपाधिविवर्जितम् ॥१९॥ सोपाध्येव बहिर्दृष्ट्या भाति ब्रह्म न तावता ॥ अपैति[1] जी-वता तस्मादंतर्दृष्ट्यैव बुध्यताम् ॥२०॥ बहिर्दृष्टिर्जगद्भानं तस्य सत्यत्वधीरपि॥ विवेकात्सत्यताऽपैति जगद्भानं तु योगतः ॥२१॥ बहिर्दृष्ट्यावपेतायामंतर्दृष्ट्या यदीक्ष्यते ॥ निगूढं जीवचैतन्यं तद्ब्रह्मेति प्रपश्यति ॥२२॥ दृष्टे तस्मिन्परप्राप्त्या विदुषोऽतिशयोऽत्र कः ॥

---

१ जीवता न नश्यति ।

इति चेद्युगपत्सर्वकामाप्तिरधिका भवेत् ॥२३॥ काम्यंते विषयानंदा निखिलैः प्राणिभिः सदा ॥ ब्रह्मानंदस्य ते सर्वे लेश्या इत्यपरा श्रुतिः ॥२४॥ आनंदहेतवो बाह्या विषया इति विभ्रमात् ॥ कामयंते बहिर्दृष्ट्या विषयान्प्राणिनोऽखिलाः ॥२५॥ अभीष्टविषये लब्धे धीः प्रत्यावृत्त्य हृद्गतम् ॥ ब्रह्मानंदं क्षणं भुक्त्वा बाह्यं कामयते पुनः ॥२६॥ क्षणिकत्वाल्लेशतास्य पूर्णस्याप्युपचर्यते ॥ विषयानंदता भ्रांत्या ब्रह्मानंदो हि वस्तुतः ॥२७॥ अंतर्दृष्ट्या विवेकी तु ब्रह्मानंदं सदेक्षते ॥ अंतर्भवंति क्षणिकाः सर्वे तस्मिन्निरंतरे ॥२८॥ तत्त्वविद्ब्रह्मरूपेण सर्वान्कामान् सहाश्नुते ॥ इत्येषोऽतिशयो ब्रह्मप्राप्तिरूपं फलं श्रुतम् ॥२९॥ सूत्रव्याख्यामरूपायामृ[1]च्यनंतमितीरितम् ॥ तदानंत्यप्रसिद्ध्यर्थं जगत्कारणतोच्यते ॥३०॥ यत्सत्यं ब्रह्म कोशाख्यगुहायां व्योमनामके ॥ अज्ञाने कारणे गूढं तस्मादाकाश उद्गतः ॥३१॥ खं वाय्वग्निजलोर्व्योषध्यन्नदेहेषु कारणम् ॥ पूर्वं पूर्वं भवेत्कार्यं परं परमितीक्ष्यताम् ॥३२॥ इं[2]द्रो मायाभिरभवद्बहुरूप इति श्रुतेः ॥ आसन्मायिकरूपाणि खादीनि ब्रह्मगानि हि ॥३३॥ परास्य शक्तिर्विविधेत्येवं श्रुत्यंतरेरणात् ॥ विविधा ब्रह्मणः शक्तिः सा च मायानृतत्वतः ॥३४॥ सत्यस्य ब्रह्मरूपत्वाच्छक्तेरनृततोचिता ॥ निस्तत्वा भासते याऽसौ माया स्यादिंद्रजालवत् ॥३५॥ मायाया विविधत्वेन तस्याः कार्येषु खादिषु ॥ नामरूपेष्वनेकत्वं भात्यन्योऽन्यविलक्षणम् ॥३६॥ भाति सर्वेषु सत्यत्वमेकं यद्ब्रह्मगं हि तत् ॥ सर्वाधिष्ठानधर्मत्वात् तत्सर्वत्रानुगच्छति ॥३७॥ सर्पधारादंडमाला रज्ज्वां याः परिकल्पिताः ॥ एतासु रज्जुगं दैर्घ्यं

---

१ ऋग्वेदवाक्ये । २ इंद्रः ईश्वरः ।

सर्वास्वनुगतं यथा ॥३८॥ व्योमाद्या देहपर्यंताः सत्ये ब्रह्मणि कल्पिताः ॥ सर्वेष्वनुगतं ब्रह्म सत्यत्वं तस्य सुस्थितम् ॥३९॥ अध्यारोपापवादाभ्यां निष्प्रपंचं प्रपंच्यते ॥ इति न्यायेन देहांत आरोपः खादिरीरितः ॥४०॥ अथापवादो जगतः कथ्यते ब्रह्मबुद्धये ॥ तत्रादौ पुत्रमित्रादिनुत्त्यै[1] देहात्मतोच्यते ॥४१॥ आत्मा वै पुत्रनामासीत्येवमात्मत्वविभ्रमः ॥ लौकिको नुद्यते[2] पुत्रे श्रुत्या युक्तिश्च विद्यते ॥४२॥ साकल्यं पुत्रभार्यादेर्वैकल्यं चात्मनीक्ष्यते ॥ इत्याह भाष्यकृत्तेन पुत्रेऽस्ति स्वात्मताभ्रमः ॥४३॥ सोस्यायमात्मा पुण्येभ्यः प्रतिधीयत[3] इत्यदः ॥वचो वक्त्यैतरेयोऽतः स्वात्मताभ्रम एव हि॥४४॥ एवं व्युदसितुं देहस्यैवात्मत्वमिहोच्यते ॥ यो देहोऽन्नमयः सोऽयमेवात्मान्यो न कश्चन ॥४५॥ मदीयः पुत्रभार्यादिरिति भेदावभासनात् ॥ गौणी स्यादात्मता पुत्रे भृत्यादौ सिंहता यथा ॥४६॥ पूर्ववासनया पुत्रे स्वात्मता भाति चेत्पुनः ॥ तद्वासनापनुत्त्यर्थं देहात्मत्वमुपास्यताम् ॥४७॥ शिरः पक्षौ मध्यपुच्छे इति देहस्य पक्षिताम् ॥ ध्यात्वा तन्निष्ठतां प्राप्य त्यजेत्पुत्रात्मताश्रुतिम् ॥४८॥ धीर्मनुष्योऽहमित्यस्ति पुत्रोऽहमिति नास्ति धीः ॥ विकारोऽस्ति परिव्राजो न पुत्रसुखदुःखयोः ॥४९॥ अन्नजो देह एवात्मा तदन्नं ब्रह्मबुद्धितः॥ उपास्य सर्वमप्यन्नं स्वाभीष्टं लभते पुमान् ॥५०॥ विवेकाद्वा ध्यानतो वा पुत्राद्यात्मत्वनिह्नुतौ[4] ॥ तथा देहात्मतां त्यक्त्वा प्राणात्मत्वं विचिंत्यताम् ॥५१॥ न देहस्यात्मता युक्ता पूर्वजन्मन्यभावतः ॥ पुरात्मा देहदं कर्म कृत्वा प्राप्नोत्यदो वपुः ॥५२॥ आयुर्मरणयोर्हेतौ प्राणे जीवात्मतोचिता ॥ स्थिते प्राणे भवत्यायुः प्राणापाये तु

१ निवृत्तये । २ णुद प्रेरणे । ३ स्वर्गीक्रियते । ४ नाशे सति ।

हीयते ॥५३॥ देहात्मवासनानुत्त्यै प्राणात्मत्वमुपास्यताम् ॥ प्राणो ब्रह्मेत्युपासीनः सर्वमायुः समश्नुते ॥५४॥ प्राणोऽपानः समानश्चो-दानव्यानौ च वृत्तयः ॥ एतासु पूर्ववत्पक्षमूर्धादीन् परिकल्पयेत् ॥५५॥ श्वासोऽधोगमनं कृत्स्ने देहेऽन्नस्य समीकृतिः ॥ उद्गारादि-बलं देहे क्रियास्तासां क्रमादिमाः ॥५६॥ वृत्तिसंघं प्राणमयं ध्यात्वा देहात्मवासनाम् ॥ संत्यज्याथ प्राणमये त्यजेद्देहवदात्मताम् ॥५७॥ प्राणो नात्मा जडत्वेन चेतनस्यात्मतोचिता ॥ मनस्तु चेत-नत्वेन सर्वस्य प्रतिभासनात् ॥५८॥ चक्षुराद्यक्षसापेक्षं मनो बा-ह्यार्थभासकम् ॥ निरपेक्षेण मनसा सुखाद्यांतरभासनम् ॥५९॥ आत्मत्वं मनसो बुध्वा त्यक्तुं प्राणात्मवासनाम् ॥ उपासीत मनस्तच्च वृत्याख्यावयवैर्युतम् ॥६०॥ यजुराद्यांश्चतुर्वेदा आदेशस्तद्गतो विधिः॥[1] तद्भासके मनोवृत्तिपंचके पक्षिकल्पना ॥६१॥ अवाङ्मनसगम्यस्य ब्रह्मणोऽप्यवबोधने ॥ शक्तं भवेन्मनस्तच्च मनो ब्रह्मेति कल्पना ॥६२॥ न ब्रह्मणि मनोजन्यस्फूर्तिस्तस्मादगम्यता ॥ मनस्यंतर्मुखे नश्येदविद्या तेन शक्तिता ॥६३॥ प्राणात्मवासनानाशे मनसोऽ-प्यात्मतां त्यजेत् ॥ कर्तुरात्मत्वमुचितं मनोऽतःकरणं खलु ॥६४॥ अहंकर्तेत्यदोऽज्ञानं विशिष्टं यस्य भासकम् ॥ तत्कर्तृरूपं विज्ञान-मात्मत्वेनावगम्यताम् ॥६५॥ अहंक्रियत इत्येषोऽहंकाराख्यः स विग्रहे ॥ आनखाग्रमभिव्याप्य स्थितो जागरणे स्फुटः ॥६६॥ तेन चेतनवद्देहो भाति सुप्तौ तु तल्लयात् ॥ भवेत्काष्ठसमो देहस्तेनाहं-कार आत्मता ॥६७॥ मदीयं मन इत्युक्तेरात्मनः करणं मनः ॥

---

१ तस्य यजुरेव शिरः । ऋग्दक्षिणः पक्षः । सामोत्तरः पक्षः । आदेश आत्मा । अथर्वांगिरसः पुच्छं प्रतिष्ठा ।

इत्यात्मानं विविच्याथ तमुपासीत पक्षिवत् ॥६८॥ श्रद्धाद्याः पंच तत्रस्थाः कल्प्या मूर्द्धादिरूपतः ॥ श्रद्धास्तिक्यमृतं बुद्धौ यथा वस्त्वनुचिंतनम् ॥६९॥ यथार्थभाषणं सत्यं योग एकाग्रता धियः॥ महस्तु योगजं ज्ञानं चिंत्याः श्रद्धादयोऽखिलाः ॥७०॥ [1]लौकिके वैदिके कर्तृविज्ञानं ब्रह्म वेत्ति चेत् ॥ त्यजेदामरणं नो चेद्ब्रह्मलोके सुखं व्रजेत् ॥७१॥ विज्ञानध्यानतो नश्येन्मनस्यात्मत्ववासना ॥ विज्ञानात्मत्वमप्येष त्यजेच्छोकयुतत्वतः ॥७२॥ शोकं तरत्यात्मबोधादिति श्रुत्यंतरे जगौ ॥ शोकसागरमग्नोऽयं कर्ता तस्यात्मता नहि ॥७३॥ आनंदस्यात्मता युक्ता सोऽत्रास्ति प्रीतिदर्शनात् ॥ सदा भूयासमेवेति नित्यं प्रेमात्मनीक्ष्यते ॥७४॥ आनंदैकस्वभावोऽपि कर्तृविज्ञानसंगमात् ॥ निजानंदं तिरस्कृत्य कदाचिच्छोकमाप्नुयात् ॥७५॥ समाधिसुप्तिमूर्छासु विज्ञानस्य लये सति ॥ नित्यानंदस्वरूपेऽस्मिञ्छोकोऽल्पोऽपि न वीक्ष्यते ॥७६॥ मूर्छासुप्त्योर्यदज्ञानं भाति तत्[2]करणं धियः ॥ कारणे बुद्धिवृत्तौ च स्वानंदः प्रतिबिंबति ॥७७॥ दुःखं राजसधीवृत्तौ सात्विक्यां तत्सुखं भवेत् ॥ [3]प्रियं मोदः प्रमोदश्चेत्युच्यते धीसुखं त्रिधा ॥७८॥ इष्टस्य दर्शनाल्लाभाद्भोगाच्च स्युः प्रियादयः ॥ ते त्रयः कारणानंद आत्मानंदश्च पंच ते ॥७९॥ पक्षिणोऽवयवाः पंच मूर्द्धाद्यास्ते[4]षु कल्पिताः ॥ आनंदमयकोशोऽयमुपास्यः पूर्वकोशवत् ॥८०॥ अन्नप्राणमनोभिज्ञानानंदैर्जनिता इमे ॥ कोशास्तेषु क्रमेण स्युरुत्तरोत्तरमांतराः॥८१॥

---

१ कर्मणि । २ यदादानं भाति तत् धियः करणम् । ३ तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनंद आत्मा । ब्रह्म पुच्छं प्रतिष्ठा । ४ तेषु प्रियादिषु ।

विज्ञानकोशन्यायेन फलमुन्नीयतामिह ॥ तदुपास्तिफलं चार्थात्तत्त्वबोधफलं भवेत् ॥८२॥ आनंदं ब्रह्म विज्ञाय त्यजेदामरणं न चेत् ॥ शरीरे पाप्मनो हित्वा सर्वान्कामानवाप्नुयात् ॥८३॥ आनंदमयकोशेऽस्मिन् पंचमावयवः श्रुतः ॥ ब्रह्मशब्देन तद्ब्रह्म स्वात्मानंद इतीक्ष्यताम् ॥८४॥ उपासनाच्चित्तशुद्धौ ब्रह्मतत्त्वमवेक्ष्यते ॥ गुहाहितब्रह्मबोधात्सर्वकामाप्तिरीरिता ॥८५॥ गुहाहितं ब्रह्म यत्तत्सत्यं ज्ञानमिति श्रुतम् ॥ तस्य ज्ञानस्य दृश्यास्ते कोशाः सर्वं जगत्तथा ॥८६॥ जगत्कोशाश्च दृश्यत्वात्संति ब्रह्म न दृश्यते ॥ अतो नास्तीत्याह मूढस्तत्सत्तां वक्ति बुद्धिमान् ॥८७॥ ब्रह्म नास्तीति चेद्वेद स्वयमेव भवेदसत् ॥ कोशात्मता दूषिता चेन्नान्य आत्मास्ति तन्मते ॥८८॥ आनंदमयकोशेऽपि प्रियाद्या नश्वरास्त्रयः ॥ अज्ञानं च ज्ञाननाश्यं न ब्रह्मांगीकरोत्यसौ ॥८९॥ अस्ति ब्रह्मेति चेद्वेद स्वयमेवात्र संभवेत् ॥ अदृश्यस्यापि सत्ता स्यात्स्वप्रकाशत्वसंभवात् ॥९०॥ गौणात्मा पुत्रभार्यादिर्मिथ्यात्मान्नमयादिकः ॥ ब्रह्मानंदो मुख्य आत्मा क्रमेणैते विवेचिताः ॥९१॥ उत्तरात्मविवेकेऽस्य[1] पूर्वात्मा देहतां व्रजेत् ॥ तेनोत्तरेण पूर्वस्य पूर्णत्वाद्देहिदेहता ॥९२॥ सत्येवं निखिलं पूर्वं शरीरं ह्यंतिमात्मनः ॥ ब्रह्मानंदस्तु शारीरः पूर्वस्यात्मेति निर्णयः ॥९३॥ श्रवणं मननं चोभे तत्त्वज्ञानस्य साधने ॥ उक्तनिर्णयपर्यंतं विज्ञानं श्रवणाद्भवेत् ॥९४॥ अथ स्वबुद्धिदोषेण यतः संदेहसंभवः॥ अतोऽसौ मननं कुर्यात्संदेहाः स्युस्त्रयोऽस्य हि ॥९५॥ ब्रह्मास्ति नो वेत्येकः स्यादज्ञानी मुच्यते न वा ॥ तत्त्वविन्मुच्यते नो वेत्यपरौ संशयावुभौ ॥९६॥ यदस्ति नामरूपाभ्यां व्याप्तं तद्वियदादिकम् ॥

१ अस्योत्तरात्मनः ।

ब्रह्म निर्नामरूपत्वान्नास्तीत्याह विमूढधीः ॥९७॥ विवेकी ब्रह्मणः
सत्तां सृष्टिकामादिहेतुभिः ॥ साधयन् बहुधा मूढं बोधयेन्मोहनु-
त्तये ॥९८॥ अकामयत सृष्ट्यादौ परमात्मा स्वमायया ॥ बहु
स्यामहमेवातः प्रजायेयेति कामना ॥९९॥ स्वस्यैव बहुधा चोक्ते-
रुपादानं मृदादिवत् ॥ तथा कामयितृत्वे न निमित्तत्त्वं कुलालवत्
॥१००॥ निर्धर्मकेऽप्यात्मतत्त्वे निमित्तत्वं स्वमायया ॥ उपादान-
त्वसहितं माया दुर्घटकारिणी ॥१॥ असंभाव्यं न मायायामुपालंभं न
साऽर्हति ॥ ततो वेदो यथा ब्रूते सृष्टिरेषा तथेष्यताम् ॥२॥ सृज्यमालो-
चयन् सर्वमसृजत्परमेश्वरः ॥ सृष्ट्वाऽथ जीवरूपेण प्रविवेश वपुष्ययम्
॥३॥ यो विज्ञानमयस्तस्मिन् चैतन्यं प्रतिबिंबितम् ॥ तच्च धारयति
प्राणान् जीवाख्यां लभते ततः ॥४॥ भोक्ता भूत्वेश्वरस्तद्वद्भो-
ग्यरूपोऽपि सोऽभवत् ॥ भोग्यं च बहुधा सच्च त्यच्चेत्यादिविभेदतः
॥५॥ सत्प्रत्यक्षं परोक्षं त्यत्तद्भा[1]वावुभौ तथा ॥ वक्तुं शक्यमशक्यं
चेत्यादि द्वंद्वेऽस्ति भोग्यता ॥६॥ कामित्वमालोचकत्वं स्रष्टृत्वं च
प्रवेष्टृता ॥ भोग्याकारश्च पंचैते ब्रह्मसद्भावहेतवः ॥७॥ सद्रूपः
परमात्मा स्यात्कामित्वात्स्वर्गकामिवत् ॥ आलोचनान्मंत्रिवत्सन्
स्रष्टृत्वाच्च कुलालवत् ॥८॥ प्रवेष्टृत्वात्सर्पवत्सन् भोग्यत्वाच्चोदना-
दिवत् ॥ नानुमानैरेव किंतु विद्वत्प्रत्यक्षतोऽपि सन् ॥९॥ यत्सत्यं
ब्रह्म पूर्वोक्तं तदेव जगदात्मना ॥ भाति भ्रांत्या ततः सर्वं ब्रह्मेत्या-
चक्षते बुधाः ॥१०॥ सर्पधारादिका भ्रांत्या कल्पिता तत्त्वदर्शने ॥
रज्जुरेव यथा तद्वद्ब्रह्मैव सकलं जगत् ॥११॥ नामरूपयुतत्वेन

---

१ प्रत्यक्षस्य प्रत्यक्षाभावः परोक्षस्य परोक्षाभावः, यथा घटो नास्ति यथा वंध्यापुत्रो नास्तीति ।

जगत्सद्ब्रह्म नेति यत् ॥ पूर्वपक्षिमतं तत्र ब्रह्मसत्त्वं तदीक्ष्यताम् ॥१२॥ रज्जुदैर्घ्यं यथा सर्पधारादिष्वनुगच्छति ॥ ब्रह्मसत्त्वं तथा व्योमवाय्वादिष्वनुगच्छति ॥१३॥ असदेवेदमग्रेऽभून्नामरूपात्मकं जगत् ॥ पश्चात्तु ब्रह्मणा सृष्टं सदभूद्ब्रह्मसत्त्वतः ॥१४॥ तद्ब्रह्मात्मानमेवेमं सच्चिदानंदलक्षणम् ॥ अकार्षीज्जगदाकारं स्वयमेव स्वमायया ॥१५॥ अस्ति भाति प्रियं चेति प्रतिवस्त्ववभासते ॥ त एते सच्चिदानंदा ब्रह्मगा भांति वस्तुषु ॥१६॥ नामरूपे घटादीनां प्रागभावयुते ततः ॥ अभावत्वं च भावत्वं पर्यायेणेक्ष्यते तयोः ॥१७॥ आगमापायिधर्मौ यौ न तयोर्धर्मिरूपता ॥ शयनोत्थानयोर्नास्ति देहवस्तुस्वरूपता ॥१८॥ सत्त्वासत्त्वे अन्यदीये[1] भासेते नामरूपयोः ॥ मायारूपमसत्त्वं स्यात् सत्ताया ब्रह्मरूपता ॥१९॥ जाड्यदुःखे मायिके स्तो भानानंदौ परात्मगौ ॥ लौकिकाः सच्चिदानंदा ब्रह्मगाश्चेदसत्कथम् ॥२०॥ भवेत्तु ब्रह्मसत्ताऽस्मिन्नानंदोऽस्ति कथं शृणु ॥ आनंदोऽत्राभ्युपेतव्यो रसवान्मधुरादिवत् ॥२१॥ मूढस्य मधुरादिः स्याद्रसो ब्रह्म विवेकिनः ॥ मधुरादिभुगानंदी ब्रह्मविच्च तथा सुखी ॥२२॥ ब्रह्मानंदो न चेदत्र देहं को नाम चेष्टयेत् ॥ प्राणाक्षाणां चेष्टकत्वं न तत्र करणत्वतः ॥२३॥ न केवलं चेष्टकत्वं विषयानंदहेतुता ॥ अप्यल्पविषयान् लब्ध्वा स्वानंदे मज्जति क्षणम् ॥२४॥ विषयानंदपर्यंतैः कामतृष्ण्यादिहेतुभिः ॥ ब्रह्मसत्त्वे स्थिते मुक्तिश्चिंत्यते विद्वदज्ञयोः ॥२५॥ विद्वान्ब्रह्मेति मुक्तश्चेत् मुच्येताज्ञोऽप्यभिज्ञवत् ॥ ब्रह्मरूपोऽपि बद्धश्चेदज्ञोभिज्ञोऽपि बध्यते ॥२६॥ मैवं ब्रह्मात्मैक्यबोध एवैको मोक्षकारणम् ॥ ऐक्य-

१ ईश्वरमाययोरिमे ।

दर्शी मुच्यतेऽतो भेददर्शी न मुच्यते ॥२७॥ ऊर्ध्वाकारे समेऽप्य-
स्मिंश्चोरदर्शी बिभेति हि ॥ स्थाणुदर्शी निर्भयोऽतस्तत्त्वबोधः प्रयो-
जकः ॥२८॥ ज्ञातेऽपि कर्मकांडार्थे वेदांतार्थमजानतः ॥ जन्मा-
दिभीर्भवत्येव वाय्वादीनां यथा तथा ॥२९॥ वायुः सूर्यो वह्निरिंद्रो
मृत्युश्चातीतजन्मनि ॥ धर्मज्ञा अप्यतत्त्वज्ञा इदानीं बिभ्यतीश्वरात्
॥३०॥ ज्ञानी कामानेति सर्वान् रसो वै स इति श्रुतम् ॥ ब्रह्मा-
नंदं स्फुटीकर्तुं मीमांसाऽनंदगोच्यते ॥३१॥ संपूर्णो मानुषानंदः
सार्वभौमे गुणैर्युते ॥ हिरण्यगर्भे संपूर्णो देवानंदोऽवधीहि तौ ॥३२॥
मध्यस्थे पूर्वपुण्यानामुत्कर्षाद्वर्धते सुखम् ॥ सर्वेषां यत्सुखं तत्तु
निष्कामे ज्ञानिनीष्यते ॥३३॥ सर्वकामाप्तिरेषाथ रसाख्यानंद
उच्यते ॥ अध्यात्ममधिभूतं चाधिदैवं चैक एव सः ॥३४॥ सर्वे
स्वस्वपदे तृप्ताः कामयंते न तत्पदम् ॥ ज्ञानी तु दोषदृष्ट्याऽत्र
निष्कामस्तैः समस्ततः ॥३५॥ बुभुत्सौ पुरुषेऽन्येषु मनुष्येषु च
योऽस्ति यः ॥ आदित्ये चान्यदेवेषु स आनंदो न भिद्यते ॥३६॥
परप्रेमास्पदत्वस्य लक्षणस्यैकरूपतः ॥ लक्ष्यानंदो न भिन्नः स्याद-
खंडैकरसो ह्यतः ॥३७॥ एवं विद्वान्स्वपुत्रादेः कोशषट्कात्प्रकल्पि-
तात् ॥ व्युत्थायाखंडैकरसे स्वानंदे प्रतितिष्ठति ॥३८॥ सार्वभौ-
मादिकानंदाः पूर्वेभ्यः शतसंख्यया ॥ परेऽधिकास्ते तु लेशा ब्रह्मानं-
दस्य बिंदुवत् ॥३९॥ तस्मादियत्ता नैवास्य वक्तुं ध्यातुं च शक्यते ॥
न बिभेत्येव तं विद्वान् जन्महेतोः कुतश्चन ॥४०॥ पुण्यं नाक-
रवं कस्मात् पापं तु कृतवान्कुतः ॥ इति चिंता तपत्यज्ञं ज्ञानिनं
न तपत्यसौ ॥४१॥ तापकत्वं तयोर्विद्वानुपेक्षानुष्ठितं तयोः ॥

१ मोक्षप्रयोजकः। २ तौ आनंदौ जानीहि। ३ ब्रह्मात्मानम्। ४ तयोः पुण्यपापयोः।

आत्मानं प्रीणयन् बोधात्सुदृढीकुरुते धियम् ॥४२॥ देहेंद्रियकृते पुण्ये पापे चात्मतया सदा ॥ पश्यन् सर्वात्मतां स्वस्य गायन् सा-म्नाऽवतिष्ठते ॥४३॥ अहमन्नं तथान्नादः श्लोककृच्चेतरोऽप्यहम् ॥ इति सर्वात्मतां गायन् जीवन्मुक्त इतीर्यते ॥४४॥ जीवन्मुक्त्यव-सानाया विद्याया मुख्यसाधनम् ॥ विचारो ब्रह्मणस्तेन भृगुर्ब्रह्मा-वबुद्धवान् ॥४५॥ सत्यं तपो दमः शांतिर्दानं धर्मः प्रजाग्नयः ॥ अग्निहोत्रं यागयोगौ न्यासश्चैतैर्बुभुत्सताम् ॥४६॥ न्यासोऽधिकं तपो न्यासी युंजीतात्मानमोमिति ॥ योगिनस्तस्य देहांशा यागां-गैरखिलैः समाः[1] ॥४७॥ अहोरात्रादिकालास्तु समा दर्शादियागकैः॥ जीवनं सत्रतुल्यं[2] स्यान्मुच्यते योगिसेवकः ॥४८॥ स चोत्तरायणे प्रेत आदित्यं प्राप्य मुच्यते ॥ अयने दक्षिणे प्रेतश्चंद्रं प्राप्य न मुच्यते ॥४९॥ तैत्तिरीयकविद्यायाः प्रकाशेनोपसेविनः ॥ बुभुत्सू-ननुगृह्णातु विद्यातीर्थमहेश्वरः ॥५०॥ इति श्रीविद्यारण्यमुनिकृते अनुभूतिप्रकाशे तैत्तिरीयकविद्याप्रकाशो नाम द्वितीयोऽध्यायः ॥२॥

छांदोग्ये श्वेतकेतुर्यामारुणेर्लब्धवानिमाम्॥ब्रह्मविद्यां संग्रहेण वक्ष्ये-ऽहं सुखबुद्धये ॥१॥ वेदानधीत्य गर्वेण श्वेतकेतुः पराङ्मुखः ॥ आसी-त्प्रत्यङ्मुखीकर्तुं गुरुराहातिविस्मयम्[3] ॥२॥ एकतत्त्वे श्रुते सर्वमश्रुतं च श्रुतं[4] भवेत् ॥ अमतं च मतं तद्वदविज्ञातं च बुध्यते ॥३॥ नर्ग्वे-दज्ञानमात्रेण यजुर्वेदादि बुध्यते ॥ तस्मादेकधिया सर्वज्ञानं स्यादि-त्यलौकिकम् ॥४॥ नैवं मृद्धेमलोहेषु लौकिकेष्वस्य[5] दर्शनात् ॥ मृदा-दिज्ञानतः सर्वं मृन्मयं ज्ञायते स्फुटम् ॥५॥ मृदो घटशरावाद्या

---

१ सदृशाः । २ यज्ञतुल्यम् । ३ येनाश्रुतं श्रुतं भवति । ४ येनाश्रुतꣳश्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम् । ५ एकस्य ज्ञानस्य सर्वज्ञानदर्शनात् ।

विकारास्तत्तदाकृतिः ॥ मृद्बोधाद्बुध्यते नेति यदुच्येत न बुध्यताम् ॥६॥
आकृत्याधारभागो यो घटस्यासौ तु बुध्यते ॥ आधारो मृत्तिकाऽधेय
आकारश्चोभयं घटः ॥७॥ आधारभागमात्रेऽपि ज्ञाते ज्ञातो घटो
भवेत् ॥ गोपुच्छमात्रसंस्पर्शाद्गोस्पर्शव्रतपूर्तिवत् ॥८॥ आकृतेर्यद्व-
दज्ञाने घटाज्ञानं त्वयोच्यते ॥ तद्वदाधारबोधेन घटो बुद्धः कुतो न
हि ॥९॥ आकृत्याधारयोस्तुल्यं भागत्वं न मृदं विना ॥ केवलाकृ-
तिमात्रः सन् घटः काऽपि समीक्ष्यते ॥१०॥ मृद्रूपात्कारणद्रव्या-
त्कार्यद्रव्यं घटादिकम् ॥ अन्यत्तत्समवेतं हि मृदीति प्राह तार्किकः
॥११॥ स्वयुक्त्याऽसौ तथा ब्रूते नत्वेतल्लोकसंमतम् ॥ घटे मृदः
पृथग्भूते कीदृक् तत्त्वमुदीर्यताम् ॥१२॥ वाचैवारभ्यते किंवा पृथ-
गानीयते वद ॥ वाचैवारभ्यते तत्त्वं किंचिन्न स्यात्खपुष्पवत् ॥१३॥
मृगतृष्णांभसि स्नातः खपुष्पकृतशेखरः ॥ वन्ध्यापुत्र इति प्रोक्तो
निस्तत्त्वमखिलं खलु ॥१४॥ पृथगानयनं कर्तुं धीमतापि न शक्यते ॥
अतोऽनृतो घटो नैव सत्य इत्यभ्युपेयताम् ॥१५॥ समवाय-
स्त्वया प्रोक्त आरोपं ब्रूमहे वयम् ॥ स्थाणावारोपितश्चौरो यथा
मृदि घटस्तथा ॥१६॥ आरोपात्पूर्वमूर्ध्वं च तदभावादसत्यता ॥
आदावंते च यन्नास्ति वर्तमानेऽपि तत्तथा ॥१७॥ कालत्रयानुगः
स्थाणुः सत्यो मृच्च तथेक्ष्यताम् ॥ सत्यानृते च मिथुनीकृत्य कुंभ
इतीर्यते ॥१८॥ शब्दप्रत्ययकार्याणि संति मृद्घटयोः पृथक् ॥ स्थाणौ
चौरे च दृष्टानि पृथक् तानि तथाऽत्र च ॥१९॥ द्विविधव्यवहा-
रस्य सद्भावेऽपि विवेकिनः ॥ सत्यायां मृदि तात्पर्यं नानृतेऽस्ति
घटादिके ॥२०॥ इक्षौ रसोऽस्त्यूजीषं[1] च रसं गृह्णाति बुद्धिमान् ॥

१ रसरहितम्।

नर्जीषमेवं कुंभेऽपि मृद्भागे युक्त आदरः ॥२१॥ ये घटादिषु मृद्भागा ज्ञातव्या आदरेण ते ॥ सर्वेऽपि राशिविज्ञानादेव ज्ञाता भवंति हि ॥२२॥ मृद ऐक्येऽपि सर्वत्वमाकारैस्तदुपाधिभिः ॥ निरुपाधिकविज्ञानात् सर्वोपहितधीर्भवेत् ॥२३॥ कटकादौ सत्यभागा बुद्धा हेमधिया तथा ॥ कुठारादौ सत्यभागा बुध्यंते लोहबुद्धितः ॥२४॥ यद्यत्कार्यं तस्य तस्य धीः स्वोपादानबुद्धितः इति ॥ व्याप्तिं विवक्षित्वा दृष्टांता बहवः श्रुताः ॥२५॥ सर्वे जगदुपादाने श्रुते सति भवेच्छ्रुतम् ॥ मते ज्ञाते मतं ज्ञातमित्यलौकिकता कुतः ॥२६॥ श्रवणं गुरुशास्त्राभ्यां मननं तु स्वयुक्तिभिः ॥ विज्ञानं स्वानुभूत्येति श्रवणादेरसंकरः ॥२७॥ श्वेतकेतुः सर्वबोधमेकबोधेन विश्वसन् ॥ प्रत्यङ्मुखो भवत्तस्मै सर्वोपादानमीरितम् ॥२८॥ इदं जगन्नामरूपयुक्तमद्य सदीक्ष्यते ॥ सृष्टेः पुरा सदेवासीन्नामरूपविवर्जितम् ॥२९॥ मृद्धेमलोहवस्तूनि विकारोत्पत्तितः पुरा ॥ निर्विकाराण्युपादानमात्राण्यासन् यथा तथा ॥३०॥ स्वसजातिविजात्युत्थभेदत्रयविवर्जनात् ॥ एकमेवाद्वितीयं तत् सद्वस्त्वित्यवगम्यताम् ॥३१॥ वृक्षस्य स्वगतो भेदः शाखाद्यवयवैस्तथा ॥ वृक्षांतरात्सजातीयो विजातीयः शिलादितः ॥३२॥ न सत्यवयवाः संति तेनैकं स्यादखंडकम् ॥ जात्यभावात्सजातीयं विजातीयं च दुर्भणम् ॥३३॥ एकादिभिः पदैर्भेदत्रयमत्र निवार्यते ॥ सर्वभेदविहीनं यदखंडं तत्सदीक्ष्यताम् ॥३४॥ अस्तीति शब्दबुद्धी द्वे दृश्येते नामरूपयोः ॥ तदभावात्पुरा सृष्टेः शून्यमाहुरवैदिकाः ॥३५॥ नामरूपात्मकं शून्यात्किलैतदुपपद्यते ॥ तदयुक्तं न वंध्यायाः पुत्रात्पुत्रांतरोद्भवः ॥३६॥ शून्य-

---

१ मृदादयः । २ सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ।

जत्वे नाम शून्यं रूपं शून्यमितीदृशः ॥ शून्यानुवेधो भासेत सद्बे-धस्त्ववभासते ॥३७॥ ततः सत्कारणं सत्तु सर्वसृष्ट्यर्थमैक्षत[1] ॥ बहु स्यामहमेवातः प्रजायेयेति मायया ॥३८॥ वस्तुतो बहुभावश्चेदद्वैतं सद्विनश्यति ॥ माभून्नाश[2] इति श्रुत्या प्रकर्षेण जनिः श्रुता ॥३९॥ प्रकर्षो नाम पूर्वस्मादाधिक्यमधिका तु या ॥ सा माया न सती नापि शून्या स्याद्दूषितत्वतः ॥४०॥ मायया बहुरूपत्वे सदद्वैतं न नश्यति ॥ मायिकानां हि रूपाणां द्वितीयत्वमसंभवि ॥४१॥ अचिं-त्यशक्तिर्मायातो दुर्घटं घटयत्यसौ ॥ उपादाननिमित्तत्वे कल्पेते सति मायया ॥४२॥ बहु स्यामित्युपादानभावः प्रोक्तो मृदादिवत् ॥ ऐक्षतेति निमित्तत्वमिति प्रोक्तं कुलालवत् ॥४३॥ मायावृत्तिविशेषे या चिच्छायाऽसौ सदीक्षणम् ॥ ईक्षित्वा ससृजे तेजस्तादृक् संक-ल्पलीलया ॥४४॥ आकाशवायू प्राक् सृष्टाविति प्रोवाच तित्तिरिः ॥ दिङ्मात्रमारुणिः सृष्टेर्वक्तुं तेज उदैरयत् ॥४५॥ ब्रह्मोपलक्षणा-यैव सृष्टिः सर्वत्र कथ्यते ॥ जगता कियताऽप्येतच्छक्यं[3][4] लक्षयितुं खलु ॥४६॥ तेजसोऽचेतनत्वेऽपि तेजः कंचुकसंयुतम् ॥ सद्ब्रह्म पूर्ववद्वीक्ष्य संकल्पात्ससृजे ह्यपः ॥४७॥ अप्कंचुकं ब्रह्म पृथ्वीम-न्नहेतुमकल्पयत् ॥ तेजोऽबन्नेभ्य एतेभ्यो देहबीजानि जज्ञिरे ॥४८॥ जरायुजांडजोद्भिज्जानीति बीजत्रयं खलु ॥ जीवरूपप्रवेशार्थमैक्षत ब्रह्म देवताः ॥४९॥ दृष्ट्वा भूय इहोत्पन्नास्तेजोऽबन्नाख्यदेवताः ॥ एकैकां त्रिवृतं तासु कुर्वे देहादिसृष्टये ॥५०॥ तेजस्यबन्नयोरंशा-वल्पौ प्रक्षिप्य मिश्रणात् ॥ तेजस्त्रिवृत्कृतं तद्वदन्ययोरपि योज्यताम्

---

१ तदैक्षत बहुस्यां प्रजायेयेति । तत्तेजोऽसृजत तत्तेज ऐक्षत इत्यादि ।
२ सन्नाशः । ३ अल्पेन । ४ एतद् ब्रह्म ।

॥५१॥ तेजोऽबन्नैस्त्रिवृद्भूतैरंडजादिवपुष्ययम् ॥ निर्माय जीवरूपेण प्राविशत्तेषु सर्वतः ॥५२॥ अहंकारस्तु चैतन्यसंयुक्तः प्राणधारणात् ॥ जीवः स्यात्सर्वदेहेषु व्याप्योत्यापादमस्तकम् ॥५३॥ सद्वस्तुन्येवमारोप्य संसारो मायया कृतः ॥ अविचारकृतारोपनिवृत्त्यर्थं विचार्यताम् ॥५४॥ त्रिवृत्करणमङ्ग्यादौ स्पष्टं तावद्विचारिणः ॥ प्रसिद्धे तैजसेऽप्यग्नावबन्नांशाववस्थितौ ॥५५॥ ज्वालायां रोहितं रूपं बहुलं तत्तु तेजसः ॥ किंचिच्छुक्लमपामेतत्किंचित्कृष्णं तु भूमिगम् ॥५६॥ रूपत्रये भूतगते विविक्ते भौतिकोऽनलः ॥ कारणव्यतिरेकेण वाचैवारभ्यते वृथा ॥५७॥ जगतश्चाक्षुषस्येत्थं मिथ्यात्वं वक्तुमादितः ॥ तेजोऽबन्नत्रयस्यात्र चाक्षुषस्योदिता जनिः ॥५८॥ आदित्यचंद्रविद्युत्सु मिथ्यात्वं वह्निवन्नयेत् ॥ गृहीत्वैतावता व्याप्तिं कार्यमिथ्यात्वमूह्यताम् ॥५९॥ तेजोऽबन्नाख्यकार्याणां मिथ्यात्वे स्यात्सदद्वयम् ॥ कारणं सत्यमेषां तु पूर्वेषां ज्ञानिनां मतिः ॥६०॥ दृश्ये बाह्ये भौतिकत्वमस्तु देहे तु नो तथा ॥ इति मूढमतेर्भ्रान्त्यै देहे भौतिकतोच्यते ॥६१॥ यदन्नं पार्थिवं भुक्तं तद्धीमांसपुरीषकैः ॥ सूक्ष्ममध्यस्थूलभागैर्देहेऽस्मिन्परिणम्यते ॥६२॥ प्राणलोहितमूत्रांशैरपां परिणतिस्त्रिधा ॥ वाङ्मज्जास्थिविभेदः स्याद्घृततैलादि तेजसः ॥६३॥ स्थूले च मध्यमे भागे कारणानुगतिः स्फुटा ॥ धीप्राणवाक्षु संदेहे दधिदृष्टांततोऽनुदत् ॥६४॥ घृते विलीनो दध्यंशोऽनुगतो भाति न स्फुटः ॥ तथापि दधिकार्यत्वं विद्यते सर्वसंमतम् ॥६५॥ तथा मनःप्राणवाचां भवत्वन्नादिकार्यता ॥ अतींद्रियत्वात् प्रत्यक्षा कारणानुगतिर्न हि ॥६६॥ नित्यद्रव्यं मनो नान्नकार्यमित्याह तार्किकः ॥ स[1] एषोंऽगारदृष्टांतद्वारेण प्रतिबोध्यते ॥६७॥

---

1 तार्किकः ।

यथा खद्योतमात्रः स्यादंगारः काष्ठसंक्षये ॥ काष्ठवृत्तौ ज्वलत्यग्नि-स्तथा विद्यान्मनोऽन्नयोः ॥६८॥ त्यक्तेऽन्ने पंचदशसु दिनेषु क्षीयते मनः ॥ तेन स्मर्तुं न शक्तोऽभूच्छ्वेतकेतुर्न किंचन ॥६९॥ अन्नेन पुष्टे मनसि वेदान् सस्मार तत्क्षणात् ॥ अन्वयव्यतिरेकाभ्यां मनोऽन्नमयमिष्यताम् ॥७०॥ भौतिकत्वेऽखिलस्यैवं स्थिते भूता-तिरेकतः ॥ तन्नास्ति तद्वद्भूतानि नैव सव्यतिरेकतः ॥७१॥ जगतः कारणं यत्सदद्वैतं तद्विजज्ञिवान् ॥ श्वेतकेतुस्तावतास्य जीवत्वं न निवर्तते ॥७२॥ स्वस्य ब्रह्मत्वबोधेन जीवत्वमपगच्छति ॥ इत्यभि-प्रेत्य तं शिष्यं पुनः प्रोत्साहयत्यसौ ॥७३॥ स्वप्नावसानं जानीहि मम व्याकुर्वतो[१] मुखात् ॥ स्वस्य स्वरूपं सत्त्वमिति सुप्तौ स्फुटं खलु ॥७४॥ यदा सुषुप्तिमाप्नोति पुमानेतं तदा जनाः ॥ स्वपिती-त्याहुरेतस्य तात्पर्यं प्रविचिंत्यताम् ॥७५॥ तिङ्न्तं पदमज्ञानां सुबंतं तु विवेकिनाम् ॥ स्यान्निद्राणस्य नामैतद्[२]वस्तुतत्त्वावभासकम् ॥७६॥ स्वप्नजागरयोर्जीवः सत्त्वाद्भिन्नवद्भवेत् ॥ सुषुप्तौ सम्यगेकत्वं याति सद्वस्तुना सह ॥७७॥ जीवत्वमात्मनः प्राणधारणान्न स्वभा-वतः ॥ सद्रूपत्वं स्वतस्तत्तु स्फुटं स्वपितिनामतः ॥७८॥ स्वमपीतीति नाम्नोऽस्य निरुक्तिरवगम्यताम् ॥ स्वरूपं वास्तवं सुप्तौ प्राप्यमित्यु-दितं भवेत् ॥७९॥ उपाधेर्मनसो जाग्रत्सुप्त्यवस्थे हि नात्मनः ॥ इत्यभिप्रेत्य शकुनिदृष्टांतः प्रोच्यते धियः ॥८०॥ शकुनिः सूत्रबद्धो यः स गच्छन्विविधा दिशः ॥ अलब्ध्वाधारमाकाशे बंधनस्थानमा-व्रजेत् ॥८१॥ सत्त्वे मायया बद्धं मनो जागरणं व्रजेत् ॥ अल-ब्ध्वा तत्र विश्रांतिं सत्त्वे लीयते पुनः ॥८२॥ आत्मच्छायाऽपि

---

१ कः । २ एतत्स्वपितिनाम ।

मनसा सदाऽगच्छति गच्छति ॥ गत्यागती तु संसारः स च स्वात्मनि कल्पितः ॥८३॥ मनोलयेऽनुपाधिः सन्नात्मा संसारवर्जितः ॥ स्वेन वास्तवरूपेण सुषुप्ताववतिष्ठते ॥८४॥ चिच्छाया च वपुः स्थूलमिंद्रियाण्यात्मबोधने ॥ द्वाराणीत्याह मंत्रोऽयं रूपंरूपमिति स्फुटम् ॥८५॥ देहे देहे प्रतिच्छायारूपोऽभूत् स्वात्मबुद्धये ॥ मायाभिरिंद्रो बहुधा देहोऽभूत् स्वात्मबुद्धये ॥८६॥ इंद्रियाश्वास्तेन युक्तास्तत्र स्वात्मावबुद्धये ॥ छायामाश्रित्य तत्रात्मा बोधितः सुप्तिवर्णनात् ॥८७॥ अशनायापिपासोक्त्या देहमाश्रित्य बोध्यते ॥ अशनायापिपासाख्या द्वयं स्वपितिनामवत् ॥८८॥ अशनाया जनैः प्रोक्ता क्षुधा वस्तुविवेकिभिः ॥ नयत्यशितमित्येवमप्सु निर्वचनं भवेत् ॥८९॥ पीता आपोऽशनं भुक्तं द्रवीकृत्य नयंत्यतः ॥ अशनायेति शब्दोक्ता विण्मांसोत्पत्तिरन्नतः ॥९०॥ विण्मांसहेतुरन्नं यदेतस्योत्पादकं जलम् ॥ जलस्योत्पादकं तेजस्तस्य चोत्पादकं च सत् ॥९१॥ अनुमायात्र कार्येण ज्ञेयं तत्कारणं परम् ॥ सन्मूलकारणं ज्ञेयं स्याद्विश्वासोऽनुमानतः ॥९२॥ पुरीषाद्यन्नकार्यं स्यात् सत्येवान्नस्य सत्त्वतः ॥ सत्यामेव यथा कुंभो मृदि दृष्टो न चान्यथा ॥९३॥ व्रीह्याद्यन्नं सतीष्वेव दृष्टमप्सु न चान्यथा ॥ आपश्च स्वेदरूपाः स्युः सत्येवोष्णे हि तेजसि ॥९४॥ तेजश्च भावरूपत्त्वात्संभवेन्न सता विना ॥ सतस्तूत्पत्तिराहित्यान्नान्वेष्यं कारणांतरम् ॥९५॥ सन्मूलाः सकला देहा इदानीं च सति स्थिताः ॥ अंते सत्येव लीयंते विद्यात्सत्तत्वमद्वयम् ॥९६॥ यथा भूतातिरेकेण भौतिकं नैव विद्यते ॥ भूतानि च सतोऽन्यानि तथा नेत्युपपादितम् ॥९७॥ अशनायामुखेनेत्थं सत्त्वे धीः प्रवेशिता ॥ पिपा-

सामुखतोऽप्यस्मिन् सति धीरवतार्यते ॥९८॥ उदन्येति पिपासायाः पर्यायस्तं विवेकिनः ॥ उदकं[1] नयतीत्येवं तेजस्येवं प्रयुंजते ॥९९॥ पीतं जलं शरीरस्थं तेजसा जीर्यते ततः ॥ मूत्रं रक्तं च निष्पन्नं द्रवत्वाज्जलजे उभे ॥१००॥ ताभ्यामापोऽनुमीयंते ताभिस्तेजस्त-तस्तु सत् ॥ व्याप्तिं गृहीत्वा सर्वत्र योजनायोदितं पुनः ॥१॥ देहे येऽवयवाः संति पदार्थाः संति ते बहिः ॥ तेषु सर्वेषु सन्मात्ररू-पत्वमवधार्यताम् ॥२॥ भौतिकत्वं पुरा प्रोक्तं तदुक्तं देहबाह्ययोः ॥ इंद्रियद्वारतो बोद्धुं प्रोच्यते मरणक्रमः ॥३॥ म्रियमाणस्य[2] वागा-दिवृत्तिर्मनसि लीयते ॥ मनोवृत्तेर्लयः प्राणे प्राणवृत्तेस्तु तेजसि ॥४॥ श्वासस्योपरतावुष्णं स्पृष्ट्वा जीवननिश्चयम् ॥ कुर्वंत्युष्णं तु तत्तेजः सद्वस्तुनि विलीयते ॥५॥ छायादेहेंद्रियद्वारैः पदार्थो योऽत्र बोधितः ॥ स एष सर्वजगतोऽणिमा वस्त्वंतरं न तु ॥६॥ स्थूल-त्वाणुत्वरूपाभ्यां वस्त्वेकं भासते द्विधा ॥ स्थूलमिंद्रियगम्यत्वान्ना-मरूपात्मकं जगत् ॥७॥ सदद्वैतं भवेत्सूक्ष्ममिंद्रियाविषयत्वतः ॥ एतदात्मकतैवास्य स्थूलस्येतीह युज्यते ॥८॥ अणुत्वं वस्तुनः प्रोक्तं यत्तत्सत्यमबाधनात् ॥ स्थूलत्वं मायया क्लृप्तं ज्ञानेनैतस्य बाधनात् ॥९॥ अबाध्यो यः स एवात्मा सर्वस्य न तु कल्पितः ॥ श्वेतकेतो यदद्वैतं तदसि त्वं न मानवः ॥१०॥ चिच्छायावानहंकारोऽधीते वेदचतुष्टयम् ॥ त्वं तु साक्ष्येव तस्मातः सदसि त्वं न चेतरः॥११॥ भिन्नोऽभूद्धृदयग्रंथिः श्वेतकेतोर्विवेकतः ॥ धीदोषं संशयं माष्टुं भूयो ब्रूहीत्यवोचत ॥१२॥ सता संपद्यते जीवः सुषुप्तावित्युदीरितम् ॥ तथा चेत्सति संपन्नोऽहमित्यस्य कुतो न धीः ॥१३॥ नानावृक्ष-

1 पिपासा उदकं तेजसि नयति । २ मरणोन्मुखस्य सर्वस्यापि जंतोः ।

रसैक्येन संपन्ने मधुनि स्थितः ॥ न बुध्यते रसोऽस्येति तथा सर्वलयान्न धीः ॥१४॥ जीवोपाधिलयेऽप्यत्र तद्बीजस्यावशेषतः ॥ तदुपाधिक एवास्मिन् देहेऽन्येद्युः प्रबुध्यते ॥१५॥ चित्तैकाग्र्याय तच्छंका परिहार्या तु वस्तुषु ॥ पूर्वोक्तमेव तद्बोद्धुं तदेवाह पुनर्गुरुः ॥१६॥ प्राज्ञमन्यतया तत्त्वमविश्वस्य स्वशंकया ॥ पुनः पुनरपृच्छत्तं प्रत्याहासौ पुनः पुनः ॥१७॥ सुषुप्तौ बुद्ध्यभावेऽपि पुनर्जागरणेऽस्ति धीः॥ आगच्छं सत इत्येवं तदा कस्मान्न वेत्त्यसौ ॥ १८ ॥ सुप्तौ सद्रूपमज्ञात्वा सदैक्यं प्राप्तवांस्ततः ॥ सतो नागमनं स्मार्यमपामस्मरणं यथा ॥१९॥ गंगाजलं प्रविश्याब्धौ मेघेनाकृष्य सिच्यते ॥ नाज्ञातत्वात्स्मृतिस्तत्र तद्वदत्र स्मृतिर्न हि ॥२०॥ व्याघ्रादिः सुप्त एवात्र बुध्यते वासनावशात् ॥ न नष्टा वासनेत्येवं विवक्षित्वोच्यते पुनः ॥२१॥ जीवस्य नश्वरस्यैक्यं न नित्येन सतेति चेत् ॥ जीवो न नश्यति कापीत्येवं वृक्षवदीक्ष्यताम् ॥२२॥ शाखां वृक्षे जीवपूर्णे जीवस्त्यजति यामसौ ॥ शुष्येन्नान्या तथा जीवेऽपगते म्रियते वपुः ॥२३॥ नामरूपयुतं स्थूलं तद्बीनात्सदणोः कथम् ॥ उत्पन्नमिति चेद्बीजाद्वटवृक्षवदीक्ष्यताम् ॥२४॥ न्यायागमाभ्यां सिद्धं च श्रद्धाहीनः पराङ्मुखः ॥ न बुध्यते श्वेतकेतो श्रद्धस्वांतर्मुखो भव ॥२५॥ तत्सर्वत्र स्थितं कस्मान्न सर्वे विदुरीदृशम् ॥ मुमुक्षुस्तु कथं वेत्तीत्यत्र दृष्टांत उच्यते ॥२६॥ लवणस्य घनं नीरे विलीनं वैति न त्वचा ॥ जिह्वया वेत्ति तद्वत्सदुपायेनैव बुध्यते ॥२७॥ सति सर्वेंद्रियागम्ये क उपायः स उच्यते ॥ उपाय उपदेशोऽत्र भवेद्गंधारमार्गवत् ॥२८॥ गंधाराद्यो वने नीतस्तस्करैर्बद्धनेत्रकः ॥ तस्य

१ तत्त्वमसि ।

बंधं विमुच्यात्र कृपालुर्मार्गमादिशत् ॥२९॥ तेनादिष्टमविस्मृत्य धीमान् गंधारमाप्तवान् ॥ अविद्ययावृतं तत्त्वं वेत्त्येवमुपदेशतः ॥३०॥ अश्लेषनाशौ विदुषः संचितागामिकर्मणोः ॥ प्रारब्धे भोग-संक्षीणे मुच्यते न तु जायते ॥३१॥ कीदृशी मतिरस्येति चेद्रा-गादिलयाद्यथा ॥ मूढस्य तद्वदेवास्य वैलक्षण्यं न किंचन ॥३२॥ समानायां मृतावेको मुक्तो नान्यः कुतो वद ॥ सत्यानृताभिसंधत्वं वैषम्यं ज्ञानिमूढयोः ॥३३॥ तस्करातस्करौ चौर्यशंकया तलरक्षकैः ॥ गृहीतौ न कृतं चौर्यमित्याहतुरुभावपि ॥३४॥ गृहीतः परशुं तप्तं तौ तयोस्तस्करोऽनृतम् ॥ अभिसंधाय दग्धः सन् हन्यते तलरक्षकैः ॥३५॥ अतस्करः सत्यसंधो न दग्धो मुच्यते च तैः ॥ अज्ञान्यनृतसंधोऽत्र सत्यसंधस्तु तत्त्ववित् ॥३६॥ मर्त्योऽहमिति संधाय म्रियते जायते च सः ॥ ब्रह्माहमिति संधाय मुच्यते न च जायते ॥३७॥ बुद्धिदोषं समाधातुं दृष्टांतास्तैस्तवात्र किम् ॥ त्वं सदेवेत्यभिप्रेत्य नवकृत्व उपादिशत् ॥३८॥ भिन्नग्रंथिः श्वेतकेतुम-ननाच्छिन्नसंशयः ॥ सदद्वैतं स्वमात्मानं विशेषेणावबुद्धवान् ॥३९॥ श्वेतकेतोर्ब्रह्मविद्याव्याख्याता स्फुटमेतया ॥ तुष्टोऽस्माननुगृह्णातु विद्या-तीर्थमहेश्वरः ॥४०॥ इति श्रीविद्यारण्यमुनिकृते अनुभूतिप्रकाशे छांदोग्योपनिषदि श्वेतकेतुविद्याप्रकाशो नाम तृतीयोऽध्यायः ॥३॥

सनत्कुमारश्छांदोग्ये नारदायोपदिष्टवान् ॥ विद्यामेतां प्रव-क्ष्येऽत्र सर्वशोकनिवृत्तये ॥१॥ पुराणपंचमान् वेदान् शास्त्राणि विविधानि च ॥ ज्ञात्वाप्यनात्मवित्त्वेन नारदः शोकमाप्तवान् ॥२॥ वेदाभ्यासात्पुरा तापत्रयमात्रेण शोकिता ॥ पश्चात्त्वभ्यासविस्मारभं-गगर्वैश्च शोकिता ॥३॥ शोकं तरत्यात्मवेदीत्यभिज्ञेभ्यः श्रुतं वचः ॥

शोकपारं नयेत्युक्त्वा नारदो गुरुमाप्तवान् ॥४॥ बहुग्रंथाभ्यासतस्ते महती शब्दवासना ॥ नाम ब्रह्मेत्युपास्स्वात इति प्रोवाच तं गुरुः ॥५॥ स्वशब्दवासनां त्यक्त्वा प्राप्स्यसि ब्रह्मवासनाम् ॥ पश्चाद्ब्रह्मण आत्मत्वं वक्ष्यामीति गुरोर्मतिः ॥६॥ ब्रह्म दृष्ट्वा नाममात्रध्याना-न्नाऽपैति शोकिता ॥ इत्यभिप्रेत्य नाम्नोऽस्मादधिकं पृष्टवानसौ ॥७॥ वाङ्नाम्नः कारणत्वेनाधिकेति ब्रह्मदर्शनम् ॥ वाचि प्राह गुरुः शिष्यः पूर्ववत् पृष्टवान्पुनः ॥८॥ आप्राणमित आरभ्य पूर्वस्मादुत्तराधिके ॥ प्रवर्तते शिष्यगुर्वोः प्रश्नोत्तरपरंपरा ॥९॥ इच्छात्मकं मनो वाचो-ऽधिकं तत्कारणत्वतः ॥ सत्यामेव विवक्षायां वक्तुमारभते पुमान् ॥१०॥ संकल्प्येदं सम्यगिति तदिच्छति पुमांस्ततः ॥ संकल्पो हेतुरि-च्छायाश्चित्तं संकल्पकारणम् ॥११॥ विक्षिप्तचित्तादैकाग्र्यं ध्यानम-भ्यधिकं ततः ॥ ध्येयविज्ञानमधिकं ज्ञानादभ्यधिकं बलम् ॥१२॥ ज्ञानहेतुर्देहबलं बलं स्यादन्नकारणम् ॥ आपोऽन्नहेतवोऽपां तु तेजः कारणमीरितम् ॥१३॥ हेतुः सवायुराकाशस्तेजसो वियतः पुनः ॥ स्रष्टव्यस्मृतिरीशस्य सृष्ट्याशा स्मृतिकारणम् ॥१४॥ नामाद्या-शांततत्त्वेषु ब्रह्मदृष्टिं करोति यः ॥ स पुमान् लभते सर्वं तत्रतत्रो-चितं फलम् ॥१५॥ प्रतीकोपासनैरेतैर्ब्रह्मायासैः प्रशोचति ॥ न शोकं तरतीत्युक्त्वा ह्यपृच्छत्सोऽधिकं पुनः ॥१६॥ पराक् पदार्थध्यानेषु फलेषु च विरक्तितः ॥ दृढां प्रत्यग्विविदिषां दृष्ट्वा प्राणमुपादिशत् ॥१७॥ न मुख्यं प्रत्यगात्मत्वं यद्यपि प्राणवस्तुनः ॥ तथाऽप्यात्मप्रति-निधिः संभवेदात्मलक्षकः ॥१८॥ कस्मिन्नुत्क्रांतउत्क्रांतो भविष्यामि स्थिते स्थितः ॥ इति वीक्ष्यासृजत्प्राणं परमात्मेति हि श्रुतिः ॥१९॥ चक्रस्यारा यथा नाभावाश्रिताश्चक्षुरादिकम् ॥ आश्रितं निखिलं प्राणे

ततस्तस्यात्मता भवेत् ॥२०॥ अश्वेन याति पुरुषो दत्ते विप्राय गां पुमान् ॥ प्राण एवाश्वादिशब्दैरुक्तो न तु शवः क्वचित् ॥२१॥ पितृमात्रादिशब्दैश्च प्राणः प्रोक्तः शवो न तु ॥ तस्मात्सर्वात्मकः प्राणः परमात्मेति निश्चयः ॥२२॥ यो बुभुत्सुरसौ प्राणमेवं पश्यन् गुरूक्तितः ॥ युक्त्या धिया च वैर्चिन्वन्नतिवादीति कथ्यते ॥२३॥ नामाद्याशांततत्त्वानि यः प्राणोतीत्य वर्तते ॥ तमात्मानं वक्ति यस्मादतिवादी भवेत्ततः ॥२४॥ तर्काद्विप्लावकेभ्योऽयं निर्भीः सन् स्वातिवादिताम् ॥ अंगीकुर्यादेव यस्मात्संदेहो नात्र विद्यते ॥२५॥ नामादीनामनात्मत्वं स्पष्टमित्यत्र नारदः ॥ असंतुष्टोऽधिकं तत्त्वं पप्रच्छैव पुनःपुनः ॥२६॥ प्राणात्मत्वं तु संभाव्यं सम्यक् तस्योपपादनात् ॥ शोकश्च सुप्तौ प्राणस्य न दृष्टोऽतस्तुतोष सः ॥२७॥ श्रद्धालुं योग्यशिष्यं तमुद्धरामीत्यसौ गुरुः ॥ अपृष्टोऽप्यधिकं तत्त्वं स्वयमेवोपदिष्टवान् ॥२८॥ आत्मोपलक्षकः प्राणो नत्वात्मैषोऽनृतत्वतः ॥ नामरूपात्मकः प्राणो माययोत्पादितो ह्यसौ ॥ २९ ॥ अनृतोऽप्येष सत्यस्य लक्षकः प्रतिबिंबवत् ॥ मुख्यस्य प्रतिबिंबेन मुखं स्वस्योपलक्ष्यते ॥३०॥ आत्मेदंबुद्धिगम्यैस्तैराशांतैर्नोपलक्ष्यते ॥ प्राणोऽहंबुद्धिगम्येषु स्थितत्वादात्मलक्षकः ॥ ३१ ॥ अतएवातिवादित्वमस्ति प्राणात्मवेदनात् ॥ अमुख्यं तच्च मुख्यं तु भवेत्सत्यात्मवेदनात् ॥३२॥ कारुण्यातिशयं दृष्ट्वा संतुष्टो नारदोऽब्रवीत् ॥ सत्येनैवात्मवादी स्यामनृतस्यात्मतां त्यजन् ॥३३॥ विचारणीयं तत्सत्यं विज्ञानमननादिभिः ॥ ध्यानवान्नोक्तिमात्रेण बुध्येतेत्यब्रवीद्गुरुः ॥३४॥ संशयं च विपर्यासं निराकृत्य विशेषतः॥यदा जानाति विज्ञानात्सत्यंवादी भवेत्तदा॥३५॥

---

१ विचारयन् । २ सत्यस्य हेतुर्विज्ञानं विज्ञानस्य हेतुर्मननं मननस्य हेतुः श्रद्धा श्रद्धाया हेतुर्निष्ठा निष्ठाया हेतुः कृतिः ( इंद्रियसंयमः ) कृतेर्हेतुः सुखम् ।

विज्ञानहेतुर्मननमन्वयव्यतिरेकभाक् ।। श्रद्धा मननहेतुः स्यादागमाचार्यवाक्ययोः ।।३६।। श्रद्धायाः कारणं निष्ठा सदा शुश्रूषणं हि सा ।। चित्तैकाग्र्यगतिर्याऽसौ निष्ठायाः कारणं भवेत् ।।३७।। सुखमस्तीति धीर्मुक्तौ कृतिस्तस्याः प्रयोजिका ।। तद्विहीनोऽयमार्द्यैर्नो चित्तैकाग्र्यं करोति हि ।।३८।। सुखं किमिति चेद्भूमा सुखमल्पे तु तन्न हि ।। क्लिश्यत्यल्पधनोऽन्यस्मिन्धनबाहुल्यदर्शनात् ।।३९।। भूम्नः सुखत्वे भूमा कः किमल्पमिति चे च्छृणु ।। ज्ञातृज्ञेयज्ञानहीनो भूमाऽविच्छेददर्शनात् ।। ४० ।। ज्ञातृज्ञानाज्ञेयरूपं मायाकार्यमिदं जगत् ।। बहुविच्छेदयुक्तत्वादल्पमित्यभिधीयते ।। ४१ ।। अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।। भूमा तस्मादमर्त्योऽयमल्पं मर्त्यमतद्विधम् ।।४२।। संसारकाल एवास्ति न मुक्तावल्पता ततः ।। मुक्तौ ज्ञाननिवर्त्यत्वान्मर्त्यं जगदितीर्यते ।।४३।। संसारमोक्षयोर्भूमा विद्यते सोऽमृतत्वतः ।। अखंडैकरसानंदः सोऽयमात्मा स्वयंप्रभः ।।४४।। मूर्च्छासुप्त्योस्तादृशोऽयमज्ञानेन तिरोहितः ।। समाधिसुप्तिमूर्च्छासु भासते साधनं विना ।।४५।। मेघेनाच्छादितः सूर्यो यथा तद्वत्स्वयंप्रभः ।। अज्ञानेनावृतो भूमा प्राणिभिर्न विभाव्यते ।।४६।। स्वप्रकाशात्मचैतन्यमज्ञानस्य न बाधकम् ।। भासकं प्रत्युतैतस्य ह्यानंदस्य यथा तथा ।।४७।। आनंदाज्ञानयोः सुप्तौ चैतन्येनावभासनात् ।। उत्थितः सुखमस्वाप्सं न जानेऽन्यदिति स्मरेत् ।।४८।। अरणिस्थो यथा वह्निर्न दहेदरणिं तथा ।। पश्चान्मथनजातोऽसौ साकल्येनारणिं दहेत् ।।४९।। तथा वेदांतवाक्योत्थधीवृत्तौ प्रतिबिंबितम् ।। स्वप्रकाशात्मचैतन्यं कृत्स्नाज्ञानस्य बाधकम् ।।५०।। तस्माद्विज्ञानसहितः समाधावनुभूय हि ।। भूमानंदं यथाशास्त्रं

स्मृत्वा व्युत्थाय वक्ति च ॥ ५१ ॥ ज्ञातृज्ञानज्ञेयरूपा त्रिपुटी स्वप्नजाग्रतोः ॥ भूमानंदं तिरोधत्ते विद्वांस्त्वभिभवत्यमुम् ॥ ५२ ॥ चिच्छायावानहंकारो ज्ञाता स्याच्चक्षुरादिजा ॥ बुद्धिवृत्तिर्भवेज्ज्ञानं ज्ञेया रूपरसादयः ॥५३॥ त्रिपुटी मायिकी मिथ्येत्येवं विज्ञाय तत्त्ववित् ॥ तामुपेक्ष्य करोत्येव भूमानंदे भरं सदा ॥ ५४ ॥ अखंडैकरसं भूमानंदं श्रुत्वा स नारदः ॥ भूम्न्यसंभावनां मत्वा पप्रच्छाधारमस्य हि ॥५५॥ सत्याधारे परिच्छेदो निराधारे न बुध्यते ॥ यद्यद्घटादिकं लोके तत्सर्वं क्वचिदाश्रितम् ॥५६॥ व्यवहारदशायां किमाधारः पृच्छ्यतेऽथवा ॥ वस्तुतो व्यवहारे तु महिम्न्येवायमाश्रितः ॥५७॥ परास्य शक्तिर्विविधेत्येवं श्रुत्यंतरेरिता ॥ भूम्नः शक्तिर्भवेन्माया तदर्थो महिमाऽखिलः ॥५८॥ महिमाख्ये जगत्यस्मिन्य आनंदोऽवभासते ॥ स भूमास्य परिच्छेदो व्यवहारे न दुष्यति ॥५९॥ वस्तुतत्त्वविचारे तु न महिम्नि प्रतिष्ठितः ॥ महिमा स्याद्गवाश्वादिर्भूम्नो नाधार एव हि ॥६०॥ अन्यस्मिन्हि महिम्न्यन्यो राजादिः प्रतितिष्ठति ॥ भूम्नो नान्यद्वस्तु तस्मात्कुत्राऽसौ प्रतितिष्ठति ॥६१॥ तथा लोके निराधार आकाशोऽस्ति तथा कुतः ॥ भूमा न स्यादतो युक्त्या निराधारोऽपि बुध्यताम् ॥६२॥ व्यावहारिक आनंदे व्युत्पत्तेः शून्यता न हि ॥ व्युत्पन्नो यौक्तिकश्चैष ऐकाग्र्ये भासते स्वयम् ॥६३॥ बोधक्रमो बुभुत्सूनां विस्पष्टमभिधीयते ॥ चतुर्दिक्ष्वध ऊर्ध्वं च भूमा बोद्धव्य आदितः ॥६४॥ सत्ताभानप्रीतयोऽत्र वीक्ष्यंते सर्ववस्तुषु ॥ सच्चिदानंदरूपोऽतो भूमा सर्वत्र तिष्ठति ॥६५॥ भूम्नो वियोगे वस्तूनि नैव संति न भांति च ॥ प्रियत्वं दूरतस्तेषां भूमा सर्वात्मकस्ततः

॥६६॥ जगद्भ्रांतिं निवार्यास्य ताटस्थ्यविनिवृत्तये ॥ अहंकारेण भूमा-नुसंधेयः सर्वदिक्ष्वसौ ॥६७॥ संत्येव सच्चिदानंदा देहादिष्वपि बाह्यवत् ॥ भूमाहंकारयोग्योऽतोऽहं सर्वमिति वा श्रयेत् ॥६८॥ गृहैकदेशेऽवस्थाय सार्वभौमोऽहमित्यसौ ॥ राजाभिमन्यते तद्वद्भू-माहमिति नो कुतः॥६९॥आभिमानिकमेवेदं भूमात्मत्वमिति भ्रमम्॥ निराकर्तुं सर्वदिक्षु भूम्नो ज्ञेया चिदात्मता ॥७०॥ अहंशब्दश्चिदात्मानं साहंकारं ब्रवीतिहि ॥ अहंकारे बोधलीने चिदात्मैवावशिष्यते ॥७१॥ क्रमेणानेन यस्तत्त्वं पश्यन् शास्त्रविचारतः ॥ युक्त्या मत्वा धिया वेत्ति जीवन्मुक्तो भवेदसौ ॥७२॥ जीवन्मुक्तो रतिक्रीडामिथुनानंदलक्ष-णान् ॥ व्यवहारान् क्रमेणैति प्रारब्धस्यानुसारतः ॥७३॥ सुखदुःख-प्रदारब्धकर्मवेगश्चतुर्विधः ॥ तीव्रो मध्यो मंदसुप्तौ चेति तस्य विधा मताः ॥७४॥ तीव्रवेगे स पश्वादितुल्यो नात्मानमीक्षते ॥ आत्मनि प्रीतिरस्तीति भवेदात्मरतिस्तदा ॥७५॥ मध्यवेगे तु भोगानां प्राधान्यं स यदा तदा ॥ कृत्वावकाशमात्मानं वदन् क्रीडति बालवत् ॥७६॥ मंदवेगे तिरस्कृत्य भोगान् प्रायेण चिंतयन् ॥ धियात्मानं द्वंद्वसुखं प्राप्नोति मिथुने यथा ॥७७॥ सुप्तवेगेऽतिनिर्विघ्नो निर्विकल्पसमाधि-भाक् ॥ आत्मानंदावशेषः सन्नास्ते मुक्तवदद्वयः ॥७८॥ स्वराट् स्यात् पतिते देहे नान्याधीनो विमूढवत् ॥ तस्य सर्वेषु लोकेषु काम-चारो भवेत्खलु ॥७९॥ मायया कल्पिता लोकास्ते सर्वे भूमरू-पताम् ॥ मुक्तस्य प्राप्नुवंत्येवं सर्वलोकात्मकस्ततः ॥८०॥ कामचा-रोऽतिविश्रंभः प्रतिबंधविवर्जितः ॥ सर्वस्य स्वस्वरूपेऽस्ति प्रतिबंधो न कोऽपि हि ॥८१॥ भूमात्मानं न जानाति मूढः किं त्वन्यथेक्षते ॥ जीवोऽहमीश्वराधीनो धर्माधर्मयुतस्त्विवति ॥८२॥ तस्येश्वरो भवे-

द्राजा लोकः कर्मजितः क्षयी ॥ कामचारस्तु लोकेषु सर्वथास्य न संभवेत् ॥८३॥ जीवन्मुक्तस्तत्त्वविद्यः शास्त्रयुक्त्यनुभूतिभिः ॥ तस्य प्राणादिनामांतं जगत्स्वात्मन उद्गतम् ॥८४॥ तस्मात्प्राणादिवस्तूनां ध्यानेनास्य फलेन वा ॥ जीवन्मुक्तस्य नार्थोऽस्ति कृतकृत्यः सुखी ह्यसौ ॥८५॥ न मृत्युं पश्यति ज्ञानी न रोगं नापि दुःखिताम् ॥ सर्वस्वात्मतया बुध्वा सर्वमाप्नोति सर्वथा ॥८६॥ विदेहमुक्तो ब्रह्मत्वात्सर्वं सृजति मायया ॥ येन यद्वीक्ष्यते तस्मै तद्रूपं स्वं प्रदर्शयेत् ॥८७॥ विषयाहरणं शुद्धे रागद्वेषादिवर्जनात् ॥ ततः शुद्धधियात्मानं भूमानं सर्वदा स्मरेत् ॥८८॥ शोकादिसर्वग्रंथीनां भूम्नः स्मृत्या विमोक्षणात् ॥ शुद्धधीर्नारदस्तस्मै तमःपारमदर्शयत् ॥८९॥ सनत्कुमारविद्यायास्तात्पर्यं स्पष्टमीरितम् ॥ तेन कुर्यान्मयि कृपां विद्यातीर्थमहेश्वरः ॥९०॥ इति श्रीविद्यारण्यमुनिकृते अनुभूतिप्रकाशे छांदोग्ये सनत्कुमारविद्याप्रकाशो नाम चतुर्थोऽध्यायः ॥४॥ ॥

प्रजापतिः स्वात्मविद्यां छांदोग्ये बहुधाऽब्रवीत् ॥ विरोचनाय चेंद्राय तां वक्ष्ये सुखबुद्धये ॥१॥ असंसार्ययमात्माऽसावन्वेष्टव्यो मुमुक्षुणा ॥ प्रजापतिरिति प्राह प्रसंगेन स्वसंसदि ॥२॥ यो निःपापोऽजरो मृत्युशोकक्षुत्तृड्विवर्जितः ॥ सत्योऽस्य कामः संकल्पश्चासंसारी स ईश्वरः ॥३॥ पापं कर्तुरकर्तात्मा चिन्मात्रः पापवान् कथम् ॥ जरामृत्यू देहधर्मौ विद्येते न चितस्ततः ॥४॥ शोकः स्यान्मनसो धर्मः क्षुत्तृष्णे प्राणगे उभे ॥ चिद्रूपस्यात्मनो नैव संति शोकादयस्त्रयः ॥५॥ चिन्मात्रस्याप्यस्ति माया कामसंकल्पकारिणी ॥ स्रक्ष्यामि जगदित्यादिकामो मायाविनोऽस्ति हि ॥६॥ आकाशादिपदार्थास्तु यथापूर्वं भवंत्विह ॥ संकल्पोऽस्ति ततो ज्ञेया व्यावहारिकसत्यता

॥७॥ अन्वेष्य परमात्माऽयं मायातत्कार्यलक्षितः ॥ गुरुशास्त्रकृतो बोधस्तस्यान्वेषणमुच्यते ॥८॥ ततोऽनुभूत्या विज्ञातुमेष्टव्यो धीनिरोधतः ॥ ध्यायन्युक्त्या च मन्वानः स्वात्मानुभवमाप्नुयात् ॥९॥ य एवं वेत्त्यसौ सर्वाँल्लोकान्कामांश्च विंदते ॥ लोकाधिष्ठानरूपत्वात्सर्वलोकात्मता भवेत् ॥१०॥ कामास्तु विषयानंदाः स्वात्मानंदस्य तेऽखिलाः ॥ लेशास्ततः सर्वकामप्राप्तिरात्मविदोऽस्ति हि ॥११॥ एतत्प्रजापतेर्वाक्यं श्रुत्वा देवासुरास्तदा ॥ उभयेऽप्यबुभुत्संतः परमात्मानमादरात् ॥१२॥ देवराजोऽसुरेशश्च तौ द्वाविंद्रविरोचनौ ॥ सत्यलोकं प्राप्य तस्मिन्नसेवेतां प्रजापतिम् ॥१३॥ द्वात्रिंशद्वर्षसेवातः प्रसन्नोऽसौ प्रजापतिः ॥ अक्षिलक्षितमात्मानं ताभ्यां द्वाभ्यामवोचत ॥१४॥ पूर्णत्वात्पुरुषो योऽस्ति परमात्माऽयमक्षिणि ॥ जाग्रत्साक्षितया स्थित्वा विद्वद्भिः सुविभाव्यते ॥१५॥ चिच्छायावानहंकारो मूढैरात्मेति भाव्यते ॥ कर्ता भोक्ता स जीवः स्यात्परब्रह्मैव साक्ष्यसौ ॥१६॥ ब्रह्मणो मरणाभावादमृतत्वं तदीर्यते ॥ अद्वितीयतया भीतिहेत्वभावाच्च निर्भयम् ॥१७॥ प्रजापत्युक्तितात्पर्यं नानुबुद्धमुभावपि ॥ राज्यवासनया चित्तं तदीयं राजसं खलु ॥१८॥ अन्यदेहस्य या छाया सा चक्षुष्युपलभ्यते ॥ तामेवात्मतया प्राहेत्येषा बुद्धिरभूत्तयोः ॥१९॥ छायात्मानं दृढीकर्तुं पुनः पप्रच्छतुर्गुरुम् ॥ अप्स्वादर्शे च यो दृष्टश्छायात्मा सोऽयमेव किम् ॥२०॥ तदीयमन्यथा ज्ञानं बुध्वापि न निराकरोत् ॥ सभामध्ये मानभंगे बुद्धिभ्रंशो भवेदिति ॥२१॥ स्वेनाक्षिण्युपविष्टो यः स सर्वत्रापि तिष्ठति ॥ इत्युक्तोपायतस्तौ द्वौ बोधयामीत्यमन्यत ॥२२॥ शरावे जलयुक्ते वा केवलौ वीक्ष्य तौ पुनः ॥ साल-

कारावेक्ष्याथ छायां नात्मेति बुध्यताम् ॥२३॥ छायाया अन्यथात्वं स्यात्साक्षी चैकविधः स्थितः ॥ आत्मत्वं निर्विकारस्य शक्यते बोद्धुमंजसा ॥ २४ ॥ तथापि पापबाहुल्यप्रतिबद्धधियावुभौ ॥ छायात्मतां शरावोक्त्या दृष्टां कृत्वात्यतुष्यताम् ॥२५॥ कालेन प्रतिबंधस्य क्षये सत्यथ तत्पुनः ॥ उपदेशं शरावाख्योपायं चालोच्य मोक्ष्यते ॥२६॥ इत्युपेक्ष्य गुरुस्तस्थौ तौ राज्यत्यागतश्चिरम् ॥ प्रयासं प्राप्य सहसा जग्मतुः स्वस्वलोकयोः ॥२७॥ एतौ प्रजापतेः शिष्याविति भ्रांत्या विपर्ययम् ॥ तदीयं प्राप्य नश्येयुरिति सोऽघोषयद्गुरुः ॥२८॥ विरोचनस्तामसत्वाच्छीघ्रं तानसुरान्प्रति ॥ गत्वा देहात्मतां तेभ्य उपादिक्षन्निजेच्छया ॥२९॥ अक्षिच्छाया देहजन्या तया देहोपलक्षणात् ॥ देह आत्मा स्वस्वदेहं सदा पूजयतासुराः ॥३०॥ देहे दृढेऽत्र भोगोऽस्ति मुक्तिः स्याच्छवपूजया ॥ इत्यासुरः संप्रदायः प्रायेणाद्यापि दृश्यते ॥३१॥ इंद्रस्तु सात्त्विकत्वेन मननं कुरुतेऽध्वनि ॥ आंध्यादयोऽपि छायायामलंकारादयो यथा ॥३२॥ एवं सत्यभयं ब्रह्म देहच्छाया कथं भवेत् ॥ एवं मत्वा समागत्य गुरोरग्रे तथाऽवदत् ॥३३॥ पापक्षयाय द्वात्रिंशद्वर्षाणि तपसेऽवसत् ॥ पूर्वोपदिष्टं भूयोऽपि ब्रवीमीत्याह तं गुरुः ॥३४॥ जाग्रति स्थूलदेहेन सांकर्यं शक्यते ततः ॥ स्वप्ने यश्चरतीवाऽसौ साक्ष्यात्मेत्यवगम्यताम् ॥३५॥ आंध्यरोगादयो दोषाश्छायायां देहबिंबगाः ॥ भांति स्वप्ने तु नैवेति तुष्टो वव्राज पूर्ववत् ॥३६॥ मन्वानः सन्नन्यदोषानपश्यत्स्वप्नमात्मनि ॥ चोरव्याघ्रादयो घ्नंतीत्यदीनागत्य चाब्रवीत् ॥३७॥ स्वप्नेऽपि वासनादेहः शंक्येतेति सुषुप्तिगम् ॥ साक्षिणं प्रोक्तवांस्तस्मै द्वात्रिंशद्वर्षसेविने ॥ ३८ ॥

तुष्टोऽगच्छत्सुषुप्तिस्थे जाड्यं दोषमवैक्षत ॥ विनष्टसदृशः सुप्तावात्मेत्यागत्य चाब्रवीत् ॥३९॥ अमूर्तं कारणं देहं बोद्धुं पापक्षयादसौ ॥ शक्तोऽभूदिति संतुष्टः पुनः प्रोवाच तं गुरुः ॥४०॥ पंचवर्षाणि सेवस्व पापशेषक्षयाय ते ॥ इत्युक्त्वा सेवते तस्मै गुरुः स्पष्टमुपादिशत् ॥४१॥ मघवन् यत्त्वया बुद्धं शरीरं तत्रिधा स्थितम् ॥ स्थूलं सूक्ष्मं कारणं च तत्तु सर्वं विनश्वरम् ॥४२॥ अनश्वरात्मतत्त्वस्य प्रवेष्टुर्जीवरूपतः ॥ भोगाधिष्ठानमेवैतदद्वपुर्नास्यात्मताऽस्ति हि ॥४३॥ जाग्रत्स्वप्नसुषुप्तेषु भासयेद्यो वपुस्त्रयम् ॥ स साक्ष्यात्मा ब्रह्मताऽस्य सुखदुःखादिवर्जनात् ॥४४॥ आत्मनः प्रतिबिंबो यः सोऽयं देहे प्रविष्टवान् ॥ प्रतिरूपो बभूवेति श्रुत्यंतरसमीरणात् ॥४५॥ स भोक्ता त्रिषु देहेषु तादात्म्यमभिमन्यते ॥ सशरीरः स्वकर्मोत्थे भुंक्तेऽवश्यं प्रियाप्रिये ॥४६॥ अशरीरं साक्षिणं तु स्पृशेते न प्रियाप्रिये ॥ संसारतदभावौ द्वौ सुस्थितौ कर्तृसाक्षिणोः ॥४७॥ एवं व्यवस्थितेऽप्यज्ञः कर्तृदेहेषु साक्षिणम् ॥ अशरीरं प्रवेश्याशु सुखं दुःखं च मन्यते ॥४८॥ विवेके सति साक्ष्येव शरीरेभ्यः समुत्थितः ॥ स्वाभाविकेन ब्रह्मात्मरूपेण व्यवतिष्ठते ॥४९॥ अस्मिन्नर्थे साक्षितुल्या दृष्टांता देहवर्जिताः ॥ वाय्वभ्रविद्युतां नास्ति हस्तपादादिमद्वपुः ॥५०॥ अदेहा वृष्टिसिद्ध्यर्थमाकारान्कांश्चिदाप्नुवन् ॥ वृष्टिनिष्पादकस्तत्तदाकारो व्योम्नि दृश्यते ॥५१॥ आकारा वृष्टिकालात्प्राग्व्योम्नि गूढा नतु स्फुटाः ॥ ततो व्योम्नः समुत्थाय निदाघे ज्योतिराप्नुवन् ॥५२॥ संतापाख्यं परं ज्योतिः प्राप्य तेन दृढीकृताः ॥ वृष्टिकाले स्वस्वरूपं स्फोरयंतीति दृश्यते ॥५३॥ तथाऽयमशरीरः सन् साक्ष्यज्ञानतिरोहितः ॥

देहैतभूर्य वपुषो विवेकेन समुत्थितः ॥५४॥ परं ज्योतिर्ब्रह्मरूपं प्राप्य वाक्योत्थबोधतः ॥ स्वेन वास्तवरूपेण निर्द्वैते नावभासते ॥५५॥ स्वतः साक्षी संप्रसादः कालुष्येण विवर्जनात् ॥ अविद्यया स्यात्कालुष्यं देहतादात्म्यविभ्रमात् ॥५६॥ जागरे स्थूलसूक्ष्माभ्यां तादात्म्याद्व्याधयोऽखिलाः ॥ आधयश्चास्य संतीदं महत्कालुष्यमिष्यते ॥५७॥ ईषत्कलुष्यता स्वप्ने सूक्ष्ममात्राभिमानतः ॥ सुप्तौ तेनापि हीनत्वादयमात्मा प्रसीदति ॥५८॥ कालुष्यबीजमज्ञानमस्त्यत्रार्थविवेचिनः ॥ बीजेनापि विहीनत्वात्सम्यगेव प्रसीदति ॥५९॥ स्वतः साक्षी संप्रसादस्तत्स्वरूपानुभूतये ॥ समुत्थानं भवेदस्य देहादिभ्यो विवेचने ॥६०॥ समुत्थितस्य जीवत्वनिवृत्त्यै ब्रह्मरूपताम् ॥ महावाक्यानि सर्वाणि बोधयंत्यतियत्नतः ॥६१॥ परं ज्योतिर्ब्रह्मरूपं प्राप्य वाक्यार्थबोधतः ॥ उत्तमः पुरुषः स स्याद्यः पुराऽक्षिणि वर्णितः ॥६२॥ देहादज्ञानतः कार्यात्कारणाच्चायमुत्तमः ॥ जीवत्वहानाद्ब्रह्मत्वभावाच्चोत्तमतोचिता ॥ ६३ ॥ द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ॥ क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥६४॥ उत्तमः पुरुषस्त्वन्य परमात्मेत्युदाहृतः ॥ इत्याह भगवान्कार्यकारणाभ्यां तमुत्तमम् ॥६५॥ उत्तमोऽयं पुमान्मूढप्राणिनामपि विद्यते ॥ तत्र तत्त्वविदः कोऽतिशयः स्यादिति चेच्छृणु ॥६६॥ स तूत्तमब्रह्मरूपं तत्त्ववित्स्वात्मवस्तुनि ॥ पर्येति स्वात्मबुध्यैतं सर्वदेहस्थमीक्षते ॥६७॥ इंद्रराजादिदेहेषु नानाखाद्यानि भक्षयन् ॥ बालैः साकं हसन्स्त्रीभिः कदाचिद्रमते सह ॥६८॥ [1]यानैः कापि ज्ञातिभिश्च सहितो मोदते खलु ॥ न कदाचित्स्मरत्ये-

१ अश्वादिभिः । २ दुःखं ।

तद्वपुर्जनसमीपगम् ॥६९॥ एतद्देहेन तादात्म्यभ्रांत्या दुःखमभूत्पुरा ॥ विवेकेन भ्रमेऽपेते तद्दुःखं नाद्य वीक्षते ॥७०॥ इंद्रराजादिदेहेषु न तादात्म्यं पुरापि च ॥ अतो न तद्देहदुःखशंकाऽप्यस्य न विद्यते ॥७१॥ सुखानि तद्देहगानि साक्षी सर्वाण्यवेक्षते ॥ साक्ष्यात्मत्वाभिमानी सन् ज्ञानी तान्यभिमन्यते ॥७२॥ दुःखान्यपीक्षते साक्षी तथाप्येतेषु तत्त्ववित् ॥ नाभिमानमुपादत्ते दुःखानां मायिकत्वतः ॥७३॥ ब्रह्मानंदस्य लेशाः स्युरानंदा विषयोत्थिताः ॥ अतस्तत्त्वविदः पक्षपातो ह्येतेषु विद्यते ॥७४॥ पुण्यमेवामुमाप्नोति न दैवान्पापमाप्नुयात् ॥ इति श्रुत्यंतरं ब्रूते सुखं सर्वात्मदर्शिनः ॥७५॥ प्रजाः शोचंति यत्किंचित्तासामेव भवेदिदम् ॥ न सर्वात्मदृशोऽस्तीति प्राहैतदपि सा श्रुतिः ॥७६॥ सर्वात्मत्वेऽपि देहादिदोषलेपो न मेऽस्ति हि ॥ अदुष्टा सूर्यभा यद्वच्चंडालादिस्पृगप्यसौ ॥७७॥ ब्रह्माद्याः स्थावरांता ये प्राणिनो मे वपुः स्मृताः ॥ कामक्रोधादयो दोषा जायेरन्मे कुतोऽन्यतः ॥७८॥ इत्याचार्या ब्रह्मबोधकुशला अभवन्पुरा ॥ सुखमात्रग्राहिणोऽत्र दृष्टांताः संत्यनेकशः ॥७९॥ वृक्षे मधुकरः पुष्परसं गृह्णाति नेतरत् ॥ यतिर्भिक्षामुपादत्ते नाशौचं कस्यचिद्गृहे ॥८०॥ मूर्खस्यापि सुखे पक्षपातोऽस्तीत्युच्यते यदि ॥ तर्हि तस्य प्रसिद्ध्यर्थं तत्त्वं सोऽप्यवगच्छतु ॥८१॥ तत्त्वे बुद्धे स्वदेहेन तादात्म्यं न स्मरत्यसौ ॥ तेन दुःखे विनष्टेऽथ सुखमेव सदेक्षते ॥८२॥ तादात्म्यस्याऽस्मृतौ देहनिर्वाहो नेति चेच्छृणु ॥ अश्वादिनेव प्राणेन प्रेरितं रक्ष्यते वपुः ॥८३॥ रथे प्रयोगयोग्योऽश्वः शिक्षितः सारथिं विना ॥ स्वयमेव सदाभ्यासाद्गंतव्यं प्रापयेत्खलु ॥८४॥ ईश्वरेणास्य देहस्य प्रेरणाय

नियोजितः ॥ प्राणस्तद्भोगदेशेऽसुं देहं नयति कर्मणा ॥८५॥ गर्भस्थानां च बालानां निर्वाहो वपुषो यथा ॥ जीवन्मुक्तस्य देहेऽपि निर्वाहः स्यात्तथा न किम् ॥८६॥ समाधावात्मरूपेण व्युत्थाने भोग्यरूपतः ॥ सर्वानंदान्सदा भुंक्ते मुक्तस्यातिशयो ह्ययम् ॥८७॥ मुक्तेन बुद्धः साक्ष्येष सर्वाक्षेषु विभाव्यताम् ॥ तत्तदिंद्रियसंयुक्तत्रिपुटीं भासयत्यसौ ॥८८॥ भासमाने साक्षितत्त्वे तद्भासा भास्यमिंद्रियम् ॥ चक्षुर्वियत्यभिव्याप्य रूपं सर्वं प्रकाशयेत् ॥८९॥ द्रष्टाहंकृत्यवच्छिन्नो दर्शनं चक्षुषः क्रिया ॥ दृश्यं रूपमियं सर्वा त्रिपुटी भाति साक्षिणि ॥९०॥ साक्षिणो भासकत्वेऽपि रूपगंधादिभित्तये ॥ चक्षुर्घ्राणाद्यक्षजातं सर्वसाधारणं मनः ॥९१॥ जिघ्राणीममहं गंधमित्यादि त्रिपुटीमिमाम् ॥ सदा भासयते साक्षी स एवात्मोत्तमः पुमान् ॥९२॥ मनोऽस्य दैवं चक्षुः स्यात्कालत्रयविभासनात् ॥ तेन भुंक्ते ब्रह्मलोकस्थितान्कामान्निजात्मनि ॥९३॥ देवाः सर्वे तमात्मानमुपास्य प्राप्नुवंत्यमून् ॥ कामांल्लोकांश्चात्मतत्त्वं बुध्वा सर्वात्मतां जगुः ॥९४॥ अन्योऽपि यस्तमात्मानमन्विष्य गुरुशास्त्रतः ॥ स्वानुभूत्या विजानाति स तानाप्नोति देववत् ॥९५॥ प्रजापतिरुवाचैवमिंद्रायेत्थं पुनः पुनः ॥ एकाधिकं वर्षशतं सेवित्वाऽसौ च लब्धवान् ॥९६॥ गुरुशुश्रूषया पापं विद्यायाः प्रतिबंधकम् ॥ अपैति विद्या लब्धा स्यादित्यत्रेंद्रो निदर्शनम् ॥९७॥ सर्वज्ञेनोपदिष्टापि प्रतिबंधक्षयं विना ॥ न लभ्यतेऽत्र दृष्टांतो विरोचन उदीरितः ॥९८॥ गुरुः कारुणिको भूत्वा सोढ्वायासं पुनः पुनः ॥ प्रजापतिरिव प्राप्तानगृह्णीत सर्वथा ॥९९॥ प्रजापतेरियं विद्या कथितानुग्रहाद्गुरोः ॥ सच्छिष्याननुगृह्णातु विद्यातीर्थमहे-

श्वरः ॥१००॥ ॥ इति श्रीविद्यारण्यमुनिकृते अनुभूतिप्रकाशे छांदोग्ये प्रजापतिविद्याप्रकाशोऽनाम पंचमोऽध्यायः ॥५॥

ब्रह्मविद्यां शौनकाय यामुवाचांगिरा मुनिः ॥ अथर्वणे मुंडकेऽसौ विशदीकृत्य वक्ष्यते ॥१॥ चतुर्मुखादिके संप्रदाये यो मुनिरंगिराः ॥ उपसद्य यथाशास्त्रमेतं पप्रच्छ शौनकः ॥२॥ एकस्मिन्विदिते सर्वं विज्ञातमिति वैदिकी[1] ॥ प्रसिद्धिरस्ति तद्वस्तु किं स्यान्निश्चित्य मे वद ॥३॥ शृणु विद्ये उभे तावद्वेदितव्ये परापरे ॥ पृष्टं वस्तु तयोर्मध्ये गम्यते परविद्यया ॥४॥ षडंगसहिता वेदा विज्ञायंते यया धिया ॥ सा धीरपरविद्या स्याद्ब्रह्मधीस्तु परा मता ॥५॥ उपनीतेन विज्ञेया वेदाः सर्वे न तावता ॥ ब्रह्मधीः किंतु वैराग्ये स्यादाचार्योपदेशतः ॥६॥ वैदिक्य[2]प्यधिकारस्य भेदादुक्ता पृथक् परा ॥ विप्राः परिव्राजकाश्च तिष्ठंतीति यथा तथा ॥७॥ यस्यामपरविद्यायां कर्माण्युक्तानि साधकाः ॥ कुर्वंति कर्मभिः शुद्धिं परविद्या करोति हि ॥८॥ परया चाक्षरं ज्ञेयमेतस्मिन्विदिते सति ॥ सर्वं जगद्भवेद्बुद्धं तस्य सर्वात्मकत्वतः ॥९॥ न विनानुष्ठितं कर्म वेदनं पर्यवस्यति ॥ ब्रह्म धीस्तावतैव स्यात्फलदेति परा मता ॥१०॥ तद्वेद्यमक्षरं कीदृगिति चेदभिधीयते ॥ ज्ञानेंद्रियैर्न विज्ञेयं ग्राह्यं कर्मेंद्रियैर्न वा ॥११॥ न गोत्रं काश्यपाद्यस्ति वर्णः शुक्लादिकश्च न ॥ न ज्ञानेंद्रियमस्त्यस्य नापि कर्मेंद्रियं तथा ॥१२॥ नित्योऽक्षरपदार्थोऽयं तद्विनाशानिरूपणात् ॥ विभुर्विविधभावित्वात्तच्च सर्वात्मकत्वतः ॥१३॥ आकाशवत्सर्वगोऽतः परिच्छेदो न देशतः ॥ न कालतोऽपि नित्यत्वाद्विभुत्वान्नापि वस्तुतः ॥१४॥ सर्वगस्याऽपि

---

१ येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति । २ द्वे परापरे वैदिक्यौ ।

सूक्ष्मत्वादक्षाऽगोचरतोदिता ॥ परिमाणाल्पता नात्र सौक्ष्म्यं दुर्लक्ष्यता तु तत् ॥१५॥ हस्तग्राह्यो घटः स्थूलो ध्वनिः सूक्ष्मस्तदग्रहात् ॥ स्वरूपसौक्ष्म्यमेतत्स्यादक्षरेऽपि भवेदिदम् ॥१६॥ धनस्येव व्ययो नास्य विक्रियादेरसंभवात् ॥ स्थिरजंगमभूतानां हेतुं तं मन्वते बुधाः ॥ १७॥ यदुक्तं लक्षणं तत्तु कौटस्थ्यादक्षरं भवेत् ॥ तद्यया वेद्यते सेयं परा विद्येति कीर्तिता ॥१८॥ न युक्तं भूतयोनित्वं साधनांतरवर्जनात् ॥ एकस्माच्चेतनाद्भूरिजडानामप्यसंभवात् ॥१९॥ बह्वौषध्यो यथैकस्या भूमेर्जाता यथा जडाः ॥ केशाश्चेतनतो जातास्तथा त्वक्षरतो जगत् ॥२०॥ ऊर्णनाभिर्यथा तंतून् सृजते संहरत्यपि ॥ अन्यानपेक्षस्तद्वत्स्यादक्षरस्यापि हेतुता ॥२१॥ ब्रह्मणो जगदुत्पत्तेः क्रमोऽयमवगम्यताम् ॥ वक्ष्यमाणेन तपसा ब्रह्मादावुपचीयते ॥२२॥ अंकुरोत्पादकं बीजमुच्छूनं स्याद्यथा जलात् ॥ सृज्यस्य बुद्ध्या संयुक्तं स्याद्ब्रह्मोपचितं तथा ॥२३॥ भोग्यवर्गांकुराख्यं यदन्नं तज्जायते ततः ॥ अव्याकृतं व्याचिकीर्षावस्थमन्नमिहोच्यते ॥२४॥ तस्मादन्नात्क्रियाशक्तिः प्राणो ज्ञानस्य साधनम् ॥ मनश्चाजायत स्थूलं सत्याख्यं भूतपंचकम् ॥२५॥ ततो भूम्यादयो लोका ज्योतिष्टोमादिकर्मसु ॥ अमृताख्यं स्वर्गफलमित्थं सर्वमजायत ॥२६॥ ब्रह्मैव जगदाकारं स्याच्चेत्तद्विकृतं भवेत् ॥ नो चेज्जगन्न जायेतेत्यत्र प्रतिविधीयते ॥२७॥ निरुपाधि ब्रह्मतत्त्वं जगदाकारभाङ्न हि ॥ मायोपाधिक एवायं सर्वज्ञः सृजते जगत् ॥२८॥ सामान्यवृत्त्या सर्वज्ञो विशेषेण च सर्ववित् ॥ ज्ञानमेव तपोऽस्यास्माज्जगद्वेदाद्यजायत ॥२९॥ जगत्कारणमद्वैतं ज्ञातव्यं परविद्यया ॥ ज्ञातेऽस्मिन्सर्वजगतस्तत्त्वं यत्तद्विबुध्यते ॥३०॥ अपरा वेदविद्या तु कर्मानुष्ठा-

नमागतः ॥ साधनं परविद्यायाः सत्यं सत्कर्मणः फलम् ॥३१॥ काम्यकर्मफलं स्वर्गो नित्यकर्मफलं धियः ॥ शुद्धिस्तच्चोभयं कर्म कृत्वावश्यमवाप्नुयात् ॥३२॥ हे सत्यकामाः कर्माणि मंत्रब्राह्मणदर्शिनः ॥ कुरुध्वमेष वः पंथा भोगमोक्षप्रसिद्धये ॥३३॥ अग्निहोत्रं जुहोत्यादौ कुर्याद्दर्शादिकानथ ॥ तदभावे जन्मसु स्यात्सप्तस्वेतस्य दुर्गतिः ॥३४॥ *काल्यादिवह्निजिह्वासु होतारं तं यथाविधि ॥ आहुत्याख्या देवतास्ता इंद्रलोके नयंति हि ॥३५॥ प्रियं वदंत्य एहीति वहंत्यः सूर्यरश्मिभिः ॥ पुण्यार्जितो लोक एष इत्युक्त्वा प्रापयंति तम् ॥३६॥ काम्यकर्मफलं प्रोक्तमीश्वरार्पितकर्मणः ॥ फलं संसारहेयत्वबुद्धिः साथ विविच्यते ॥३७॥ क्षुद्रायास्तरणं नद्याः प्रसिध्यत्यदृढैः प्लवैः ॥ न समुद्रस्य यज्ञश्च तद्वच्छिथिलसाधनम् ॥३८॥ तेनाप्नोति स्वर्गमात्रं न तु मोक्षं तथा सति ॥ कर्मनिष्ठा जरामृत्यू प्राप्नुवंति पुनः पुनः ॥३९॥ ज्ञानवद्वैदिकत्वेन कर्मणो मुक्तिहेतुता ॥ अस्तीति चेन्न संसारमूलहेत्वनिराकृतेः ॥४०॥ अविद्या संसृतेर्मूलमेतस्यामेव कर्मिणः ॥ वर्तंते न तु जानंति ब्रह्मात्मानं सदद्वयम् ॥४१॥ पंडितंमन्यतां प्राप्ताः कर्मकांडार्थवेदनात् ॥ गुरुश्च तादृगेवातो ह्यंधनीतांधवत्स्थिताः ॥४२॥ अहं यज्वा वाजपेयराजसूयादिभिर्मखैः ॥ कृतार्थ इति रागेण मत्वा भोगक्षये पतेत् ॥४३॥ वरिष्ठं कर्म मत्वास्माच्छ्रेयोऽन्यन्नैव वेत्त्यसौ ॥ स्वर्गादागत्य विप्रत्वं प्राप्नोति श्वादिजन्म वा ॥४४॥ कर्मांतरं चेद्रम्यं स्याद्विप्रत्वं श्वादितान्यथा ॥ असारतामिमां वेत्ति शुद्धधीर्नित्यक-

* १ काली २ कराली ३ मनोजवा ४ सुलोहिता ५ सधूम्रवर्णा ६ स्फुलिंगिनी ७ विश्वरुचिः ।

र्मभिः ॥४५॥ उपासको ब्रह्मलोकं प्राप्नोत्यावृत्तिवर्जितम् ॥ तथापि भूयानायासो मुक्तिश्चास्य विलंबते ॥४६॥ परीक्ष्य कर्मजाँल्लोका-न्कर्मणा मुक्त्यसंभवात् ॥ विरक्तो ब्रह्मबोधार्थं गुरुमेति यथाविधि ॥४७॥ वेदांतानामनेकत्वात् संशयानां बहुत्वतः ॥ वेद्यस्याप्यति-सूक्ष्मत्वान्न जानाति गुरुं विना ॥४८॥ श्रवणान्मननाद्ध्यानादप्यु-पायाद्गुरूदितात् ॥ अज्ञानसंशयौ जह्याद्विपरीतां च भावनाम् ॥४९॥ गुरुश्च योग्यशिष्याय विद्यामक्षरबोधिनीम् ॥ ब्रूयात्स्वकीयविद्यायाः संप्रदायप्रवृत्तये ॥५०॥ तदेतदक्षरं सत्यं मायाशक्तिसमन्वितम् ॥ तस्मात्सर्वे समुत्पन्ना विस्फुलिंगा यथाग्नितः ॥५१॥ अक्षरात्मा स्वयंज्योतिर्मायारूपाक्षरात्परः ॥ अचिंत्यशक्तिरनृता मायास्मिन्क-ल्पयेज्जगत् ॥५२॥ मायाविनोऽस्मात्प्राणादि वियदादि च जायते ॥ ततो विराडभूत्तस्मिन्नवशिष्टमभूज्जगत् ॥५३॥ पुरुषो मायया सर्व-जगद्रूपेण भासते ॥ सर्वं पुरुष एवातो वस्तुतत्त्वावलोकने ॥५४॥ देहत्रयगुहायां यच्चैतन्यं साक्षि विद्यते ॥ एतत्सर्वात्मकं ब्रह्मेत्येवं बुद्ध्वा तमो नुदेत् ॥५५॥ अज्ञोऽहमिति तादात्म्यमज्ञानस्यात्मताऽ-स्ति यत् ॥ अविद्याग्रंथिरेव स्यात्स च बोधाद्विकीर्यते ॥५६॥ आविर्भूतं स्वयं भानात्स्वत्वात्सन्निहितं च यत् ॥ ब्रह्मास्मिन्कल्पितं सर्वमिति धीर्बोध उच्यते ॥५७॥ सा धीश्चेन्न स्थिरा तर्हि प्रणवेन विचिंतयेत् ॥ बाणेन विध्यते लक्ष्यं विध्येद्ब्रह्म तथा धिया ॥५८॥ धीर्बाणो धनुरोंकारो ब्रह्म तल्लक्ष्यमुच्यते ॥ अप्रमत्तेन वेद्धव्यं लग्ना ब्रह्मणि धीर्भवेत् ॥५९॥ दृढं लग्नं बालशल्यमाकृष्टमपि नाव्रजेत् ॥ मुक्तशल्यः समागच्छेद्बाण एव वृथा यथा ॥६०॥ ब्रह्मसंलग्नधी-रेवं स्वयं नायाति कुत्रचित् ॥ किंत्वकिंचित्करं चक्षुराद्येवायाति

बाह्यतः ॥६१॥ दर्शनादिक्रियाः कुर्वन् यथापूर्वं य इंद्रियैः ॥
सिध्यसिद्धी न जानाति जीवन्मुक्तः स उच्यते ॥६२॥ पंचीकृतो[1]-
क्तमार्गेण प्रणवध्यानमाचरेत् ॥ ततो जगदधिष्ठानमेकमेव सदे-
क्ष्यते ॥६३॥ लौकिकीर्वैदिकीश्चान्याः सर्वा वाचः परित्यजेत् ॥
ध्यायेच्चेद्ब्रह्म तस्यात्र धीर्ग्रंथ्यादि विनश्यति ॥६४॥ भिद्यते हृदयग्रं-
थिश्छिद्यंते सर्वसंशयाः ॥ क्षीयंते चास्य कर्माणि तस्मिन् दृष्टे
परावरे ॥६५॥ परमव्याकृतं यस्मादवरं स्याच्चिदात्मनः ॥ दृष्टे
तस्मिन्नहंकारचितोर्ग्रंथिर्विभिद्यते ॥६६॥ अहंकारस्य कर्तृत्वं चित्य-
ध्यस्य तथा चितः ॥ स्फूर्तिं चाहंकृतौ[2] ग्रंथिं कुर्यान्माया तयोर्दृढम्
॥६७॥ भिन्ने ग्रंथौ विवेकेन संशया ब्रह्मतत्त्वगाः ॥ छिद्यंते स्याद्भा-
विजन्महेतुकर्मक्षयस्तथा ॥६८॥ आनंदरूपं हृत्कोशे यद्भाति प्राणिनां
सदा ॥ तच्छुभ्रं ज्योतिषां ज्योतिर्द्रष्टव्यं तन्मुमुक्षुभिः ॥६९॥
भासका अपि सूर्याद्यास्तद्भासयितुमक्षमाः ॥ तस्मिन्नादौ भासमाने
तद्भासा भासतेऽखिलम् ॥७०॥ सर्वासु दिक्षु तद्भाति तस्मिन्नंत-
र्भवत्यदः ॥ जगत्ततः पृथङ्नास्ति तरंगादिर्जलाद् यथा ॥७१॥ जल-
तत्त्वं तरंगादौ ब्रह्मतत्त्वं तथाऽखिले ॥ ततो ब्रह्मणि विज्ञाते विज्ञातं
सकलं भवेत् ॥७२॥ अखंडैकरसं ब्रह्म समाधावेव भासते ॥ व्युत्थाने
भोक्तृभोक्तारौ भासेते पक्षिवत् पृथक् ॥७३॥ वृक्षे पक्षी फलं भुंक्ते
क्षुधितोऽन्यस्तु वीक्षते ॥ चिच्छायावानहंकारो भुंक्ते चिद्वीक्षते
तथा ॥७४॥ बोधात्पुरा तु चिद्भ्रांत्या मग्ना भोक्तरि शोचति ॥ सा[3]
भ्रांतिर्भोक्तनिष्ठैव तद्विवेकोऽपि भोक्तृगः ॥ ७५ ॥ भोगावांतरभेदौ[4]
हि भ्रांतितद्बाधकावुभौ ॥ इतरारोपवंतौ च चित्यध्यस्तौ न वास्तवौ

१ पंचीकरणग्रंथोक्तमार्गेण । २ आरोप्य । ३ तस्याः भ्रांत्याः । ४ जीवेशौ ।

॥७६॥ विविनक्ति यदा भोक्ता पुण्यपापे तदास्य नो ॥ क्रीडत्या-
त्मन्यसौ ध्यानाद्द्यूतादौ मूढवत्सदा ॥७७॥ आत्मन्येव रतिं कुर्या-
त्सर्वदा नित्यकर्मवत् ॥ वरिष्ठो[1] ब्रह्मवित्स्वेष व्यर्थक्षणविवर्जनात्
॥७८॥ सत्यं तपो ब्रह्मचर्यं विद्याधिकृतिकारणम् ॥ मुख्याधिकारी
विद्यायां वरिष्ठो ब्रह्मविद्भवेत् ॥७९॥ न चक्षुषा नापि वाचा नान्यै-
रक्षैश्च गृह्यते ॥ न कर्मणा न तपसा विनांतर्मुखतां क्वचित् ॥८०॥ ध्या-
नेनांतर्मुखो वाक्यो[2]द्ब्रह्मात्मानमवेक्षते ॥ विशुद्धबुद्धिरात्मज्ञो यथावक्ति
तथा भवेत् ॥८१॥ भूतिकामो विभूत्यर्थमात्मज्ञं सर्वदार्चयेत् ॥ निष्का-
मस्तमुपासीनो वेत्ति ब्रह्मत्वमात्मनः ॥८२॥ कामश्रै[3]ष्ठ्यपरः कामै-
स्तत्रतत्र प्रजायते ॥ जीवन्नेवात्मवित्सर्वकामानां लयमाप्नुयात् ॥८३॥
न वेदपाठबाहुल्यान्न बहुश्रुतितस्तथा ॥ आत्मा लभ्योऽथ देवोऽयं
वृणु[4]ते तेन लभ्यते ॥८४॥ ईश्वरानुग्रहादेव भवेदद्वैतवासना ॥
तस्माद्ब्रह्मार्पितं कर्म कुर्यादीश्वरतुष्टये ॥८५॥ ईशानुग्रहयुक्तस्य सच्चि-
दानंदलक्षणाम् ॥ तनुं विवृ[5]णुते स्वीयां परमात्मा ह्यशेषतः ॥८६॥ श्रवणं
मननं ध्यानं यस्य न प्रबलं भवेत् ॥ प्रमादो वास्ति विषयासक्त्यात्मा न
स बुध्यते ॥८७॥ तपो नास्त्या[6]श्रमोपेतं यस्य शुद्धा न तस्य धीः ॥
संपत्त्या श्रवणादीनामसौ ज्ञानेन तृप्यति ॥८८॥ वेदांतधीनिश्चितार्थाः
संन्यासाच्छुद्धबुद्धयः ॥ ब्रह्मदृष्टौ स्थिराश्चांते मुच्यंते मूलका[7]रणात्
॥८९॥ संसारिणां देहपातोऽपरांतः पुनरुद्भवात् ॥ परांतो विदुषां देह-
पातः पुनरनुद्भवात् ॥९०॥ परांतकाले मुक्ता ये ब्रह्मत्वात्ते परामृताः ॥

---

१ (–ब्रह्मवित् १ ब्रह्मविद्वरः २ ब्रह्मविद्वरीयान् ३ ब्रह्मविद्वरिष्ठः ४) । २ तत्त्वमस्यादिवाक्यात् । ३ कामानेव श्रेष्ठत्वेन मन्यते यः सोऽपरः । ४ अनुगृह्णाति । ५ प्रकाशयति । ६ आश्रमेण संयुक्तं तपो यस्य नास्ति । ७ अज्ञानात् ।

कलाः पंचदशैतेषां लीयंते स्वस्वकारणे ॥९१॥ प्राणः श्रद्धा खादिभूतपंचकं चेंद्रियं मनः ॥ अन्नवीर्यतपोमंत्राः कर्म लोकाश्च ताः कलाः ॥९२॥ वागादीननुगृह्णंति वह्न्यादेः शक्तयः पुरा ॥ ताश्च देवानेव यांति स्वानुग्राह्यविलेपनात् ॥९३॥ अनारब्धानि कर्माणि विज्ञानमयनामकः ॥ कर्ता च विद्यया लीनः स्वस्मिन्काठिन्यवद्घृते ॥९४॥ अब्धावस्तं यांति नद्यो नामरूपे विहाय हि ॥ तथा विद्वान्नामरूपान्मुक्तो याति परं पदम् ॥९५॥ यः कोऽपि ब्रह्म वेत्त्येष ब्रह्मैव भवति स्वयम् ॥ अब्रह्मवित्तस्य कुले न स्यादेतद्विबोधतः ॥९६॥ शोकं तरति पाप्मानमपि धीग्रन्थितोऽखिलात् ॥ मुक्तो ब्रह्मात्मबोधेन भवत्येवामृतोऽखिलः ॥९७॥ क्रियावंतः श्रोत्रिया ये सगुणब्रह्मचिंतकाः ॥ तेषामेव ब्रह्मतत्त्वविद्यामेतां वदेद्बुधः ॥९८॥ अंगिराः शौनकायैतत्सत्यं ब्रह्मोपदिष्टवान् ॥ नमस्कृत्य ब्रह्मविदो ब्रह्मविद्यामवाप्नुयात् ॥९९॥ शौनकस्य ब्रह्मविद्या विस्पष्टमुपवर्णिता ॥ तुष्टोऽस्माननुगृह्णातु विद्यातीर्थमहेश्वरः ॥१००॥ इति श्रीविद्यारण्यविरचिते अनुभूतिप्रकाशे मुंडकोपनिषद्विवरणो नाम षष्ठोऽध्यायः ॥६॥

अथर्वणे पिप्पलादः षण्मुनिभ्यो[1] यदब्रवीत् ॥ तत्सर्वं प्रविविच्याऽत्र प्रवक्ष्यामि पृथक् पृथक् ॥१॥ मुनयो वेदतात्पर्यात्सगुणब्रह्मचिंतकाः ॥ परं ब्रह्माऽपेक्षमाणाः समिद्धस्ता गुरुं ययुः ॥२॥ गुरूपसत्तिसंपूर्त्यै वर्षं गुर्वंतिकेऽवसन् ॥ सम्यक् फलति विद्यैषा वार्षिक्या गुरुसेवया ॥३॥ कात्यायनोऽपृच्छदादौ स्थूलदेहजनिक्रमम् ॥ फलं त्वपरविद्यायास्तत्र स्पष्टीभविष्यति ॥४॥ कर्मोपास्ति-

१ कात्यायनभार्गवकौशल्यगार्ग्यसत्यकामभारद्वाजेभ्यः ।

श्चापरस्यां विद्यायां श्रूयते द्वयम् ॥ तत्फलं जन्मकष्टं तदित्यभिप्रेत्य वर्ण्यते ॥५॥ प्रजापतिः प्रजाकामो विराट्सृष्टेरनंतरम् ॥ स्रष्टव्यालोचनाख्यं तत्तपः कृत्वाऽसृजत्प्रजाः ॥६॥ भोग्यभोक्त्रात्मकं द्वंद्वं रयिप्राणाख्यमादितः ॥ सृष्ट्वाऽभिमानिनौ देवौ चंद्रादित्यौ च सृष्टवान् ॥७॥ मूर्तमोषध्यादि भोग्यं शब्दगंधरसादिकम्॥ अमूर्तमनयोर्वृद्धिं देवश्चंद्रः करोति हि ॥८॥ आदित्य उद्यन्भोक्तृणां तत्तद्दिग्वर्तिनामिमान् ॥ प्राणान्प्रवर्तयेद्भोक्तृनेतेऽन्नं भुंजते ततः ॥९॥ चंद्रस्थितिमहोरात्रं सूर्यः संपादयत्यतः॥ तत्समूहस्वरूपोऽसौ कालः संवत्सरोऽभवत् ॥१०॥ यद्यदुत्पद्यते तत्तत्स्यादुपाधिः प्रजापतेः॥ प्रजापतिर्वत्सरात्मा स पुनर्द्विविधोऽभवत् ॥११॥ अभूतां वत्सरांशौ द्वावयने दक्षिणोत्तरे ॥ चंद्रादित्यौ तत्र देवौ दक्षिणोत्तरमार्गयोः ॥१२॥ इष्टापूर्तकृतश्चंद्रं[1,2] यांति दक्षिणमार्गतः ॥ आवर्तंते पुनस्तत्र क्रममुक्तिर्न विद्यते ॥१३॥ योगिनः सगुणध्यानाद्रविमुत्तरमार्गतः ॥ गत्वा तन्मंडलं भित्त्वा ब्रह्मलोकं व्रजंति हि ॥१४॥ आसीत्प्रजापतिर्मासः पक्षौ शुक्लेतराविह ॥ यौ तयोश्च रविश्चंद्रोऽभिमंतारावुभौ स्थितौ ॥१५॥ रविध्यायी तु कृष्णेऽपि कुर्वन् शुक्लफलं व्रजेत् ॥ शुक्लपक्षे फलाधिक्यं शास्त्रोक्तं काम्यकर्मणाम् ॥१६॥ प्रजापतिरहोरात्ररूपोऽभूदह्नि देवता ॥ रविश्चंद्रो रात्रिदेवो रात्रावेव रविस्ततः ॥१७॥ भोक्तृभोग्यात्मकं द्वंद्वं सृष्ट्वाऽप्यैष प्रजापतिः ॥ अन्नरूपोऽभवत्तस्मादन्नाद्रेतस्समुद्भवः ॥१८॥ रेतसोऽमूः प्रजा जाता रेतस्सेकं प्रजापतेः ॥ व्रतं चरंति चेत्पुत्रं पुत्रीं चोत्पा-

---

१ अग्निहोत्रं तपः सत्यं वेदानां चानुपालनम् । अतिथिर्वैश्वदेवश्च इष्टमित्यभिधीयते ॥ १ ॥ वापीकूपतडागादि देवतायतनानि च । अन्नप्रदानमित्येतत्पूर्तमित्यभिधीयते ॥ २ ॥

दयंति हि ॥१९॥ ब्रह्मचर्यरता ऊर्ध्वरेतसो ब्रह्मचिंतकाः ॥ ब्रह्मलोकं व्रजंत्यन्ये निस्तपस्का न यांति तम् ॥२०॥ कात्यायनेन यत्पृष्टं हेयं जन्म तदीरितम् ॥ भार्गवः सूक्ष्मदेहस्य स्थूलेऽप्राक्षीद्विवेचनम् ॥२१॥ तस्मिन्विवेचिते स्थूलस्यानात्मत्वं स्फुटं भवेत् ॥ धारको द्योतकः श्रेष्ठ इत्यप्राक्षीदसौ त्रयम् ॥२२॥ देवाः कति स्थूलदेहं धारयंत्यत्र धारणम् ॥ द्विविधं जननं तस्य प्रेरणं चेति तद्द्वयम् ॥२३॥ ज्ञानवर्गे क्रियावर्गे स्थिताः के भासयंति तम् ॥ प्रेरणाख्ये धारणेऽस्मिन् श्रेष्ठो देवेषु को भवेत् ॥२४॥ काठिन्यं च द्रवोष्णत्वे चलनं छिद्रमित्यमी ॥ दृश्यंतेंऽशाः पंचभूतजन्योऽतो देह इष्यते ॥२५॥ वाक्पाण्यादिः क्रियावर्गः क्रियां कुर्वन्न भासयेत् ॥ ज्ञानवर्गो मनश्चक्षुरादिको भासयेद्वपुः ॥२६॥ प्रेरणाख्यां धारणां तु प्राण एव करोति हि ॥ भूतेंद्रियाभिमानिन्यो देवता गर्वमाप्नुवन् ॥२७॥ वयं देहमवष्टभ्य प्रेरयामो गृहादिषु ॥ प्राणदेवोऽन्यदेवानामेतं गर्वं न्यवारयत् ॥२८॥ यूयं मा प्राप्नुत भ्रांतिमहमेवात्र पंचधा ॥ प्राणापानादिभिर्भोगैर्धारयामि ह्यदो वपुः ॥२९॥ तानविश्वसतो देवान्विश्वासयितुमेष तु ॥ देहान्निर्गंतुमुद्युक्तो ह्यासन् देवाश्च विह्वलाः ॥३०॥ स्थिते स्वराज्ञि तिष्ठंति निर्गच्छंति च निर्गते ॥ मधुकृन्मक्षिका देवाश्चासन्प्राणवशास्तथा ॥३१॥ प्राणः सूत्रं तेन बद्धाः सर्वे तत्तद्वशा इमे ॥ उत्क्रांतिं वारयंतस्ते प्राणं तुष्टुवुरादरात् ॥३२॥ देहोऽकिंचित्करः प्राण एव संसारकारणम् ॥ भार्गवो निश्चिकायेत्थं पिप्पलादेन बोधितः ॥३३॥ क्रममुक्तिर्हेतुरस्य प्राणस्य ध्यानमित्यसौ ॥ कौशल्यः प्राणविषयान् षट्प्रश्नानकरोत्स्फुटम् ॥३४॥ प्राणोऽयं कुत उत्पन्नः कथमेष वपुर्व्रजेत् ॥ स्वरूपं

प्रविभज्यैष कथं देहेऽवतिष्ठते ॥३५॥ केन वृत्तिविशेषेण देहादु-
त्क्रांतिमाप्नुयात् ॥ बाह्यं जगत्कथं धत्ते तस्याऽध्यात्मधृतिः कथम्
॥३६॥ उपास्तिश्रद्धया सर्वं विशेषं पृष्टवानिति ॥ तुष्टो गुरुरुवा-
चैषां प्रश्नानां स्पष्टमुत्तरम् ॥३७॥ परमात्मन उत्पन्नः प्राण आत्मा
त्वविक्रियः ॥ अविकृत्यैव देहं स्वं देहच्छाया यथोचिता ॥३८॥
छायानृतैव दृष्टा चेत्प्राणोऽप्यात्मनि कल्पितः ॥ यथा दर्पणदीप्त्या-
दिर्मायोपाधिस्तथात्मनः ॥३९॥ पूर्वकल्पे कृतं कर्म मनसा यत्तदेव
हि ॥ प्राणस्य स्थूलदेहेषु समागमनकारणम् ॥४०॥ ग्रामेष्वधिकृता-
न्सम्राड्विनियुंक्ते यथा पृथक् ॥ प्राणो वृत्तीः स्वकीयास्ता विनियुंक्ते
यथायथम् ॥४१॥ मलमूत्रविसर्गार्थमपानं स्थापयेदधः ॥ मुखना-
सिकयोः कुर्वन्स्वयं श्वासमवस्थितः ॥४२॥ समानः स्थापितो मध्ये
भुक्तमन्नं समं नयेत् ॥ अन्नाप्यायनतो मूर्द्धच्छिद्रैः सप्तविधोऽभवत्
॥४३॥ हृत्पुंडरीके जीवात्मा स्थितस्तद्बहुभिर्वृतम् ॥ नाडीभेदैर्मूल-
नाडी संख्या चैकाधिकं शतम् ॥४४॥ प्रत्येकं शतसंख्याः स्युः
शाखा नाड्यस्तथा पुनः ॥ द्वासप्ततिसहस्राणि प्रतिशाखाः प्रकी-
र्तिताः ॥४५॥ तासु सर्वास्ववस्थाय व्यानोऽयं कुरुते बलम् ॥ करो-
त्युदान उत्क्रांतिं कंठस्थो ह्यन्यजन्मने ॥४६॥ विभज्य पंचधात्मान-
मेवं देहे व्यवस्थितः ॥ उदानवायुनोत्क्रांतिरुक्ता बहिरथोच्यते
॥४७॥ आपो भूमिवियद्वायुतेजसां येऽभिमानिनः ॥ देवास्तद्रूपतः
प्राणो धत्ते बाह्यमिदं जगत् ॥४८॥ पुनस्तद्देवतारूपः शारीरांश्चक्षु-
रादिकान् ॥ प्राणादीननुगृह्णातीत्याध्यात्मं धारणं भवेत् ॥४९॥
रवेरनुग्रहश्चक्षुष्यस्ति तद्वत्परेष्वपि ॥ अपानादिषु भूम्यादेरुपकारोऽस्ति
शाश्वतः ॥५०॥ तेजोदेवतयोदानोऽनुगृहीतो यतस्ततः ॥ शारी-

रौष्ण्ये प्रशांतेऽस्माद्देहाद्देहांतरं व्रजेत् ॥५१॥ मनस्येकीभवंत्यादाविं-द्रियाणि तदात्मनः ॥ यं देहं भावयेत्तत्र याति प्राणः स जीवकः ॥५२॥ षट्सु प्रश्नेषु निर्णीतं प्राणं ध्यायति यः पुमान् ॥ सोपाधिकब्रह्मवेदी स क्रमेण विमुच्यते ॥५३॥ ब्रह्मलोकांतसंसारोऽपर-विद्याफलं ततः ॥ गार्ग्यस्तु परविद्यार्थं पंच प्रश्नानवोचत ॥५४॥ कानि स्वपंति कान्यत्र जाग्रति स्वप्नदृक्च कः ॥ सुप्तौ सुखं भवे-त्कस्य जगत्कस्मिन्विलीयते ॥५५॥ दशेंद्रियाणि बाह्यानि स्वपंत्यंत-र्धिया सह ॥ रश्मयोऽस्तं यथा यांति संध्यायां रविणा सह ॥५६॥ श्रवणादिक्रिया नैव सुप्तत्वादिति गम्यते ॥ तदापि जाग्रति प्राणाः श्वासादेरविलोपनात् ॥५७॥ जाठराग्निः पटुर्भूत्वा भुंक्ते जरयते तदा ॥ प्राणान् यागाग्निरूपेण ध्यात्वा यागफलं व्रजेत् ॥५८॥ बाह्याक्षाणामुपरमे मनोऽनुपरतं यदा ॥ जीवात्मा तदुपाधिः सन् सदा स्वप्नमवेक्षते ॥५९॥ नाडीषु संचरञ्जीवो नानाजन्मभिरार्जिताः ॥ वासना वीक्षते सोऽयं स्वप्न इत्यभिधीयते ॥६०॥ हृच्छिद्राण्यावृ-तानि स्युः सुप्तौ पित्ताख्यतेजसा ॥ चित्तोपाधिकजीवोऽपि पित्तेना-त्राभिभूयते ॥६१॥ दुःखवृत्त्युदयश्चित्ते नास्ति छिद्रनिरोधतः ॥ आत्मानंदः स्वप्रकाशस्तदा जीवस्य तिष्ठति ॥६२॥ सुप्तौ च प्रलये मुक्तौ जगदात्मनि लीयते ॥ निवासवृक्षे लीयंते संध्यायां पक्षिणो यथा ॥६३॥ तन्मात्राणि च भूतानि ज्ञानकर्मेंद्रियाण्यपि ॥ अंतः-करणभेदाश्च शक्ती ज्ञानक्रियात्मके ॥६४॥ एतेषां विषयाः सर्वे द्रष्टृश्रोत्रादिनामकाः ॥ जीवोंऽतःकरणस्थोऽपि जगत्सर्वमिदं भवेत् ॥६५॥ न किंचिद्भाति निद्रायां लीनं स्यात्तदवेक्षया ॥ सर्वेषां प्रलये यद्वन्मुक्तौ तत्त्वविदस्तथा ॥६६॥ परमात्मा लयाधारो यथा तद्व-

1720



त्स्थितेरपि ॥ आधारस्तेन जगतः परमात्मोपलक्ष्यताम् ॥६७॥ उप-
लक्षयिता जीवो बुद्धौ चित्प्रतिबिंबकः ॥ उपलक्ष्यं ब्रह्म तत्तु स्याद-
च्छायादिरूपकम् ॥६८॥ छाया तमस्तेन हीनं शरीरत्रयवर्जितम् ॥
लौहित्यादिगुणैर्हीनं शुभ्रं क्रोधाद्यभावतः ॥६९॥ अक्षरं नाशहेतू-
नामभावाद्ब्रह्म तादृशम् ॥ यो जानाति स सर्वज्ञः सर्वात्मा च भवे-
त्खलु ॥७०॥ सत्यकामस्तु पूर्वोक्तब्रह्मानुभवसाधनम् ॥ प्रणवध्या-
नमप्राक्षीत्फलभेदेन संयुतम् ॥७१॥ लोकेषु ज्ञानकर्मभ्यां साध्येषु
कतमं व्रजेत् ॥ आमृति प्रणवध्यायी सविशेषमिदं वद ॥७२॥
शृण्वोंकारः प्रतीकं स्यादपरस्य परस्य च ॥ ब्रह्मणोऽन्यतरद्ब्रह्म प्रण-
वेन विचिंतयेत् ॥७३॥ विराडाद्यपरं तद्वत्सत्यज्ञानात्मकं परम् ॥
मात्रात्रयविभक्तं तदपरं ब्रह्म चिंतयेत् ॥७४॥ विराडकारः सूत्रा-
त्मोकारो ह्यव्याकृतं पुनः ॥ मकार इति विज्ञेयो विभागोऽपरचिंतने
॥७५॥ सूत्रव्याकृतविज्ञातहीनो यदि विचिंतयेत् ॥ विराण्मात्रं
तमोंकारं तदापि व्यर्थता न हि ॥७६॥ ऋगाख्यदेवाः सहसा
भूर्लोकं प्रापयंति तम् ॥ पूर्ववासनया योगमभ्यस्यत्यधिकं पुनः
॥७७॥ विराट् सूत्रात्मकं मात्राद्वयं ध्यात्वा तु नीयते ॥ यजुर्वेदैः
सोमलोकं पुनरावृत्तिसंयुतम् ॥७८॥ विराट् सूत्राव्याकृताख्यं त्रि-
मात्रं प्रणवं स्मरेत् ॥ सामवेदैर्ब्रह्मलोकं नीयते मुक्तिकारणम् ॥७९॥
समस्तजीवसंघाख्यः सूत्रात्मा यः परोऽन्यतः ॥ तस्मादपि परं
ब्रह्मतत्त्वं यत्तदवेक्षते ॥८०॥ क्रममुक्तिर्भवेदित्थमपरब्रह्मचिंतनात् ॥
ॐकारेण परं ब्रह्म ध्यात्वेक्षित्वा च मुच्यते ॥८१॥ शांतं जरामृ-
त्युहीनमभयं ब्रह्म यत्परम् ॥ तच्चोंकारेण विद्वान् यः सोऽन्वेतीति
पृथक् श्रुतम् ॥८२॥ मुक्तौ प्राप्यं परं ब्रह्म यत्तस्य प्रत्यगात्मताम् ॥

बुभुत्सुः सन् भरद्वाजः पुरुषं प्रष्टुमिच्छति ॥८३॥ राजपुत्रः षोडशभिः कलाभिः पुरुषं युतम् ॥ अपृच्छन्मां न वेदाहं वद तं पुरुषं मुने ॥८४॥ शृण्वसौ पुरुषो देहे हृन्मध्ये भासते सदा ॥ तस्मिन्प्राणादिनामांता माययोत्पादिताः कलाः ॥८५॥ प्राणः श्रद्धा खादिभूतपंचकं चेंद्रियं मनः ॥ अन्नं वीर्यं तपो मंत्राः कर्म लोकाश्च नाम च ॥८६॥ आरोपिताः कला यस्मिन् पूर्णोऽसौ पुरुषस्ततः ॥ उपलब्धिस्तथाप्यस्य देहमध्ये प्रशस्यते ॥८७॥ चिद्रूपताऽत्र विस्पष्टा दर्शनश्रवणादिभिः ॥ अपैति जीवता देहे स्थिते पूर्णत्वबोधनात् ॥८८॥ जीवत्वापादकोपाधिः प्राणस्तस्माज्जनैः सदा ॥ प्राणोत्क्रांतिस्थिती स्वात्मन्यारोप्येते मुमुक्षुभिः॥८९॥कस्मिन्नुत्क्रांत उत्क्रातिमाप्स्यामीति विचारयन् ॥ परमात्माऽसृजत्प्राणान् जनारोपो भवेत्ततः ॥९०॥ जीवत्वस्यारोपितस्य निवृत्त्यर्थं चिदात्मनि ॥ देहस्थे पूर्णरूपेण पुरुषत्वं विबुध्यताम् ॥९१॥ जगत्प्राणादिनामांतं सर्वमस्मिन्प्रकल्पितम् ॥ सर्वाधिष्ठानरूपत्वात् पूर्णत्वमुपपद्यते ॥९२॥ नदीष्वब्धिं प्रविष्टासु लीयेते रूपनामनी ॥ कलास्वात्मनि बोधेन लीनास्वात्माऽब्धिवत्स्थितः ॥९३॥ एषोऽकालोऽमृतः पूर्णश्चिदात्मा मुक्त उच्यते ॥ एवं बोधयितुं सर्वे वेदांताः संप्रवर्तिताः ॥९४॥ कलाः प्रतिष्ठिता यस्मिन् रथनाभावरा[1] इव ॥ तं वेद्यं पुरुषं सर्वे जानीध्वं मृत्युहानये ॥९५॥ कात्यायनादयः सर्वे शृणुध्वं मुनिपुंगवाः ॥ एतावदेव ब्रह्माहं वेद्मि नातोऽधिकं क्वचित् ॥९६॥ मुनयोऽप्यर्चयंतस्तं पिप्पलादं वचोऽब्रुवन् ॥ संसारभयतोऽस्माकं पालनात्त्वं हि नः पिता ॥९७॥ अविद्यायाः परं पारं यस्तारयति तस्य ते ॥

---

१ अरा यथा रथाधिष्ठानकाष्ठे तिष्ठन्ति तद्वत् ।

शुश्रूषामुचितां कर्तुं न शक्ताः प्रणतिं विना ॥९८॥ गुरुभ्यः परमर्षिभ्यो भूयो भूयो नमो नमः ॥ इत्येवं पिप्पलादस्तान्मुनीननुगृहीतवान् ॥९९॥ वेदैश्चतुर्भिरुत्पन्ना विद्येयं ब्रह्मगोचरा ॥ प्रकाशितातः संतुष्याद्विद्यातीर्थमहेश्वरः ॥१००॥ इति श्रीविद्यारण्यविरचिते अनुभूतिप्रकाशे प्रश्नोपनिषद्विवरणं नाम सप्तमोऽध्यायः ॥७॥

ऐतरेये तैत्तिरीये छांदोग्येऽथर्वणे च यत् ॥ तत्त्वं चतुर्वेदविद्याप्रकाशे तत्समीरितम् ॥१॥ अनुभूतिप्रकाशेऽथ कौषीतक्यादिनामसु ॥ चतुर्वेदांगशाखासु यत्तत्त्वं तदुदीर्यते ॥२॥ ऋग्वेदस्थितशाखा या कौषीतक्यभिधांकिता ॥ तस्यां प्रतर्दनायेंद्रः प्राहात्मानुभवं स्फुटम् ॥३॥ मनुष्येभ्यो हिततमं वरं वव्रे प्रतर्दनः ॥ हितं हिततरं चेंद्रो मेने हिततमं धिया ॥४॥ हितं स्वर्गसुखं मर्त्यसुखादप्यधिकत्वतः ॥ तद्वैराग्यं हिततरं यागाद्यायासवर्जनात् ॥५॥ स्वात्मबोधो हिततमो नित्यानंदानुभूतिदः ॥ इति मत्वेंद्र आहैतं शिष्यं जानीहि मामिति ॥६॥ सहस्राक्षोऽहमित्युक्तेर्मदेह इति चेरणात् ॥ अस्मच्छब्दो वपुस्तस्य स्वामिनं च ब्रवीत्ययम् ॥७॥ सहस्राक्षवपुस्तेन दृष्टं स्वामी तु तद्दृशा ॥ न द्रष्टुं शक्यते लिंगात्पुरैवानुमतः खलु ॥८॥ सहस्राक्षवपुः स्वामियुक्तं स्याद्व्यवहर्तृतः ॥ मच्छरीरवदित्येवं बालेनाप्यवबुध्यते ॥९॥ अतो बुद्धिमतो बोद्धुं योग्योऽस्मच्छब्दलक्षितः ॥ विवक्षितः कश्चिदर्थ इति शिष्येण निश्चितम् ॥१०॥ अलौकिकात्मा ज्ञेयोऽस्तु तद्विज्ञानेन किं फलम् ॥ इति चेद्दुःखसंबंधराहित्यं तत्त्वधीफलम् ॥११॥ तस्माद्धिततमं ज्ञानं दुःखाभावोऽत्र वर्ण्यते ॥ सहस्राक्षे स्थूलदेहे दुःखं रोगादिजं भवेत् ॥१२॥ स्वामिन्यस्मिन्सूक्ष्मदेहे पुण्यपापकृतं भयम् ॥ त्वाष्ट्रा-

दीनां वधेऽप्यासीद्भयं नैव चिदात्मनः ॥१३॥ त्वष्टुः पुत्रो विश्व-
रूप आसीद्देवपुरोहितः ॥ स्वामिद्रोहं चकारासौ तं त्वाष्ट्रं हतवान-
हम् ॥१४॥ कर्तर्यभूद्ब्रह्महत्या नत्वसंगे चिदात्मनि ॥ वेदांतज्ञान-
हीनानां यतीनां हनने तथा ॥१५॥ लोकत्रये बहुविधानसुरान्
हतवानहम् ॥ चिदात्मनोऽपि मे तत्र नैव लोमापि हिंस्यते ॥१६॥
माहात्म्यं मम नैतत्स्यात्किंतु ज्ञानस्य तद्भवेत् ॥ अन्योऽपि मां
चिदात्मानं वेत्ति चेत्तत्फलं भवेत् ॥१७॥ वाचा वा मनसा मातृ-
वधादीन्कुरुते यदि ॥ तथापि ज्ञानिनो मोक्षो न ह्येतैर्विनिवार्यते
॥१८॥ पापं कृतवतोऽप्यस्य मुखे हर्षक्षयो न हि ॥ न मुक्तिर्नश्य-
तीत्येवं शास्त्रैरस्य विनिश्चयात् ॥१९॥ ननु मूढस्यापि नास्ति चिन्मात्रे
पापलेपनम् ॥ ततः कोऽतिशयस्तत्त्वविदः स्यादिति चेच्छृणु
॥२०॥ अहंकर्तृगतं पापमज्ञात्वारोप्यते चिति ॥ तेन ग्लानिर्मुखे
भाति जन्मापि नरके भवेत् ॥२१॥ ज्ञानेन कर्मणस्तस्य बीजभावो
विनश्यति ॥ जन्मप्ररोहो नैवास्तीत्येवं निश्चित्य हृष्यति ॥२२॥
दग्धबीजं यथा लोके न प्ररोहक्षमं तथा ॥ ज्ञानाग्निदग्धं यत्कर्म
न तज्जन्मप्रदं भवेत् ॥२३॥ तर्हि तत्त्वविदः श्रेष्ठा मूढवन्नियमेन
तत् ॥ कुतः पापं त्यजंतीति चेद्रहस्यमिदं शृणु ॥२४॥ यद्यप्या-
मुष्मिकी[1] हानिर्नास्त्यथाप्यैहिकी तु सा ॥ महती विद्यते तेन पापं
यत्नेन वर्जयेत् ॥२५॥ शिष्टास्त्यजंति पापिष्ठं प्रत्यक्षो नरकः स
हि ॥ तन्निंदकस्तस्य पापं गृहीत्वा नरकं व्रजेत् ॥२६॥ स्तोता कर्मी
तु संसर्गात्स्वयमप्याचरेत्तथा ॥ इत्थं दोषत्रयं दृष्ट्वा शिष्टाः पापं
त्यजंति हि ॥२७॥ किं च पुण्यरतः पूर्वं ज्ञानमाप्नोति नान्यथा ॥

१ परलोकहानिः ।

पश्चाच्च तद्वासनया पुण्यमेव करोत्यसौ ॥२८॥ किं बहूक्त्या तत्त्वविदो न भयं पारलौकिकम् ॥ उपदेशसहस्र्यां च तथाचार्यैरुदीरितम् ॥२९॥ परलोकभयं यस्य नास्ति मृत्युभयं तथा ॥ तस्यात्मज्ञस्य शोच्याः स्युः सब्रह्मेंद्रा अपीश्वराः ॥३०॥ मां जानीहीत्येवमिंद्रः स्वात्मज्ञाने प्रवर्त्य तम् ॥ प्राणोऽस्मीत्यादिवाक्येन तस्मै तत्त्वमवोचत ॥३१॥ प्राणप्रज्ञे क्रियाज्ञानशक्ती द्वे लिंगदेहगे ॥ तदधिष्ठानरूपत्वात्ताभ्यामात्मोपलक्षितः ॥३२॥ प्रज्ञात्मा प्राणरूपोऽस्मीत्येवं तस्मा अवोचत ॥ आनंदोऽक्षर इत्यादिनिर्णय[1]स्तस्य उच्यते ॥३३॥ अत्रोपायो नास्ति कश्चिदुपाधिमुपलक्षकम् ॥ विनात्मवाचकः शब्दो यस्मान्न क्वापि वीक्ष्यते ॥३४॥ लोके गुणक्रियाजातिरूढयः शब्दहेतवः ॥ नात्मन्यन्यं[2]तमोऽमीषां[3] तेनात्मानाभिधीयते ॥३५॥ उपाधिष्वपि सर्वेषु सामीप्यात्प्रत्यगात्मनः ॥ प्राणप्रज्ञाद्वयं योग्यमत्यंतं तेन लक्ष्यते ॥३६॥ प्राणशब्दोऽभिधावृत्त्या वायुं चेष्टकमाह हि ॥ प्रज्ञाशब्दो ज्ञानहेतुं बुद्धिं वक्ति स्वशक्तितः ॥३७॥ तद्भ्रांत्यधिष्ठानतया तद्धेतुत्वोपचारतः ॥ ताभ्यामात्मा लक्ष्यमाणो ज्ञेयः शाखाग्रचंद्रवत् ॥३८॥ देहेंद्रियादयो भावा ज्ञानादिव्यापृतिक्षमाः ॥ यस्य सन्निधिमात्रेण सोऽहमित्यवधारय ॥३९॥ अजडात्मवदाभांति यत्सान्निध्याज्जडा अपि ॥ देहेंद्रियमनःप्राणाः सोऽहमित्यवधारय ॥४०॥ उपाधिलक्षितं तत्त्वं यदि बोद्धु न शक्नुयाः ॥ तर्ह्युपाधिद्वयोपेतमुपास्व गुणसंयुतम् ॥४१॥ आयुष्यममृतत्वं च गुणौ प्राणस्य संमतौ ॥ इहायुः प्राणतः स्वर्गे चामृतत्वमिति स्फुटम् ॥४२॥ सत्यसंकल्पता प्रज्ञागुणो ध्यानानुसारतः ॥

---

१ तटस्थलक्षणं । स्वरूपलक्षणम् । २ एकोपि न । ३ गुणक्रियादीनाम् ।

फलमाप्नोति कामी चेन्निष्कामस्तत्त्वमीक्षते ॥४३॥ उपास्त्यैकाग्र्य-
मास्वाथ तत्त्वं वीक्षितुमादितः ॥ प्रज्ञाप्राणावुपाधी तौ विविच्येतां
यथातथम् ॥४४॥ श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणं धींद्रियपंचकम् ॥
वाक्पाणिपादपायूपस्थाः कर्मेंद्रियपंचकम् ॥४५॥ इंद्रियाणां प्रवृत्तिः
स्यात्प्रज्ञालोचनपूर्विका ॥ प्राणवायुप्रेरिता चेत्येवं लोके व्यवस्थितिः
॥४६॥ तत्र मूढाः केचिदाहुर्युगपच्चक्षुरादयः ॥ सर्वेऽपि स्वस्ववि-
षये प्रवर्तंत इतीदृशम् ॥४७॥ तदसन्निपुणोऽप्यत्र न शक्तः सूक्ष्म-
मीक्षितुम् ॥ कालाल्पत्वेन संछाद्य क्रमं धूर्तो विडंबयेत् ॥४८॥
प्रज्ञाप्राणसहायेन विना नैवेंद्रियं क्वचित् ॥ प्रवर्तते सहायस्तु क्रम-
भावीति निश्चितः ॥४९॥ अन्यथा निखिलं वेदं धूर्तो ह्येकक्षणे
पठेत् ॥ या प्रज्ञाप्राणयोर्वृत्तिः सा स्याद्वाग्वृत्तिवत्क्रमात् ॥५०॥
प्रज्ञाप्राणानुग्रहेण वाग्यदाह तदेतरे ॥ चक्षुराद्या उपरतास्तामनुब्रुवते
खलु ॥५१॥ स्वव्यापारे प्रवृत्ताश्चेत्प्रज्ञाप्राणानुकर्षणात् ॥ वाचो विघ्नो
भवेद्विघ्नाचरणं ह्यनुवादिता ॥५२॥ एवमन्यत्रापि योज्यमतः सर्वेऽपि
संहताः ॥ एकैकविषयो ह्युक्तो व्यहारः क्रमाद्भवेत् ॥५३॥ क्रम-
भावी विचित्रोऽयं व्यवहारश्चिदात्मना ॥ येनैकेनेक्ष्यते सोऽयमन्यः
सर्वेभ्य इष्यताम् ॥५४॥ प्राणा वागादयः सर्वे किं समा उत
विद्यते ॥ श्रेष्ठस्तेष्विति चेत्प्राणः श्रेष्ठो जीवनकृत्त्वतः ॥५५॥ तस्मा-
दुपेक्ष्य वागादीन्प्राणोपाधिः समाश्रितः ॥ आत्मबोधाय किंचायं
प्राण उत्थापयेद्वपुः ॥५६॥ ननु सुप्तावयं प्राणो देहं नोत्थापयत्य-
मुम् ॥ किंतु जागरणे तस्मात्प्रज्ञैवात्र प्रयोजिका ॥५७॥ चतुर्भिरु-
ह्यते यत्तु सर्वशक्त्या शरीरकम् ॥ तूलायते तदेवाहंधियाघ्रातमिती-
क्ष्यते ॥५८॥ सत्यमेव ततः प्रज्ञोपाधिः प्राणवदाश्रितः ॥ प्रज्ञात्मा

प्राण एवैको मिलित्वोपाधिरिष्यते ॥५९॥ द्वयोर्मृतौ जीवने च सहभावात्तदेकता ॥ उत्थापकत्वादुक्थं तदित्यैकात्म्याय चिंतयेत् ॥६०॥ तत्रैकात्म्ये क्षमा बुद्धिर्बोद्धुं तत्साक्षिणं भवेत् ॥ जगद्धेतुतयाऽप्येष प्राणः स्वात्मोपलक्षकः ॥६१॥ एकादशेंद्रियाण्येषां विषयाश्च जगत्खलु ॥ सुप्तौ सर्वं जगल्लीनं प्राणोपाधिक आत्मनि ॥६२॥ इंद्रियाण्येव लीयंते विषया नेति चेन्न तत् ॥ प्रातीतिकस्य जगतो मानाभावो लयो मतः ॥६३॥ प्रातीतिकत्वं वेदांतसिद्धांते जगतः स्फुटम् ॥ अतः सुप्तौ जगल्लीनं प्रबोधे जायते पुनः ॥६४॥ प्राणप्रतीतिरप्यस्य सुप्तौ नास्तीति चेत्तदा ॥ प्राणोक्तिरन्यदृष्टैव प्राणेनात्मोपलक्ष्यते ॥६५॥ प्रबोधे स्वात्मनोऽक्षाणि जायंते विस्फुलिंगवत् ॥ तेभ्योऽभिमानिदेवाः स्युर्देवेभ्यो विषया इमे ॥६६॥ दृष्टिसृष्टिमिमां ब्रह्मानुभवी बहु मन्यते ॥ स्वप्रबोधात्स्वसंसारो लीयते स्वप्नवद्यतः ॥६७॥ न्यायेनानेन मरणे मूर्च्छादौ चोह्यतां लयः ॥ लीनस्य पुनरुत्पत्तौ व्यवहारक्रमं शृणु ॥६८॥ प्राणोपाधिकजीवात्मा यदा व्यवजिहीर्षति ॥ तदा वाक् सृजते शब्दं जीवो वाचा ब्रवीति तम् ॥६९॥ एवं सर्वत्र विज्ञेयं प्राणे सर्वाप्तिरीरिता ॥ प्रज्ञा प्राणादभिन्नाऽतस्तस्यां सर्वाप्तिरुच्यते ॥७०॥ वाक् प्रज्ञाया एकमंशमभिमानाख्यमाश्रिता ॥ प्रज्ञाभिमानवशतः शब्दोच्चारणशक्तियुक् ॥७१॥ शरीरगा त्वगप्येवं शक्ताभूत् स्पर्शजे सुखे ॥ रतौ प्रजातावानंदे चोपस्थः शक्तिमानभूत् ॥७२॥ क्रीडा चोत्पादनं वीर्यमोक्षश्चोक्तमिदं त्रयम् ॥ ध्येये ज्ञेये च कामादौ चित्तं शक्तमभूत्खलु ॥७३॥ सर्वेंद्रियेषु प्रज्ञाया अभिमानोऽवधार्यताम् ॥ अन्वयव्यतिरेकाभ्यामुदाहार्योऽखिलेष्वसौ ॥७४॥ प्रज्ञया वाचमारुह्य

जीवो नामाभिवक्ति च ॥ अन्यचित्तोऽभवं तेन नावोचमिति चोच्यते ॥७५॥ वक्ष्यामीत्यभिमानोऽयं वागारोह इतीर्यते ॥ ध्यास्यामीत्यभिमानात्तु चित्तारोहस्तथा भवेत् ॥७६॥ अभिमानोऽपि धीवृत्तिः सापि पूर्वं भवेदथ ॥ धिया ध्यानादिरित्येका धीः क्रमात्कुरुते द्वयम् ॥७७॥ यथा प्राणे जगत्सर्वं लयोत्पत्त्योरवस्थितम् ॥ प्रज्ञायां च तथा सर्वं स्थितिकाले व्यवस्थितम् ॥७८॥ प्रज्ञाप्राणौ ततो मुख्योपाधी स्वात्मावबोधने ॥ तद्द्वारेणावबोद्धव्यो जीवात्मादौ विवेकिना ॥७९॥ वाचा नामाभिवदनं यत्तत्स्यात्कर्तृपूर्वकम् ॥ क्रियात्वात्कृषिवत्कर्ता चाहमित्यनुभूयते ॥ ८० ॥ शब्दादिविषयेऽहंधीः केनापि न हि शक्यते ॥ देहेंद्रियेष्वपि तथा मदीयत्वावभासनात् ॥८१॥ आनखाग्रमहंकारो वपुर्व्याप्यावतिष्ठते ॥ चिद्बिंबप्रतिबिंबाभ्यां व्याप्तोऽसौ कर्तृतां व्रजेत् ॥८२॥ क्रियावांश्चेतनः कर्ताहंकारस्तादृशस्ततः ॥ कर्ता भूत्वाखिलैरक्षैर्व्यापारान्कुरुतेऽखिलान् ॥८३॥ जीवात्मानं विविच्येत्थं चेतनं प्राणधारिणम् ॥ विविच्यात्परमात्मानमानंदं शुद्धचेतनम् ॥८४॥ प्रतिबिंबाहंकृतिभ्यां बिंबं निष्कृष्य साक्षिणम् ॥ ब्रह्मेति विद्यात्सर्वस्य तस्मिन्नारोपितत्वतः ॥८५॥ प्रज्ञामात्रा भूतमात्रा ग्राह्यग्राहकरूपतः ॥ संसारं निर्वहंत्यस्मिन्नात्मतत्त्वे प्रकल्पिताः ॥८६॥ चक्रस्यारास्त्वाश्रिता स्यान्नेमिर्नाभावरास्तथा ॥ अक्षेषु विषयास्तानि चात्मनि प्राणलक्षिते ॥८७॥ चेष्टाकल्पनहेतुत्वात्प्राणो धीकल्पनस्य च ॥ हेतुत्वेन भवेत्प्रज्ञा ततस्त्वानंद एव हि ॥८८॥ परप्रेमास्पदतया सर्वेषां यो विभात्यसौ ॥ नित्यानंदपरात्मा स्यादजरामरणवर्जितः ॥८९॥ न पुण्येन भवेद्देवो न पापेन पशुर्भवेत् ॥ चिच्छायावानहंकार एव स्यात्पुण्यपापवान् ॥९०॥ तदीये पुण्यपापे

द्वे देहस्थे च जरामृती ॥ स्वात्मन्यारोपयेन्मूढस्ततो देवादिजन्मभाक् ॥९१॥ आरोपे बाधिते बोधात्कर्म स्याद्दग्धबीजवत् ॥ ततो जन्मांकुरो नास्ति निर्लेपे परमात्मनि ॥ ९२ ॥ कार्योपाधेरभावेऽपि कारणोपाधिमत्वतः ॥ कर्मास्यास्त्विति चेदीशः कर्माध्यक्षो न कर्मकृत् ॥९३॥ कारयित्वा पुण्यमेष कर्तारं स्वर्गमापयेत् ॥ पापं तु कारयित्वा तं नरकं प्रापयेदसौ ॥९४॥ पर्जन्यवत्प्रेरकत्वान्नास्य वैषम्यमापतेत् ॥ शाल्यादीन्बहुधा वृष्टिर्वर्धयेद्विषमापि नो ॥९५॥ उत्तमाधमभावोऽत्र तत्तद्बीजेन कारितः ॥ तारतम्यं च जीवेषु स्वस्ववासनया कृतम् ॥९६॥ मातृवत्पालयेल्लोकं शिक्षयेत्पितृवत्प्रभुः ॥ स्वामी स्याद्राजवत्सोऽयं ममात्मेत्यवगम्यताम् ॥९७॥ मायोपाधौ स्थिते तस्य मिथ्यात्वं बुध्यते ततः ॥ संसारी जीववन्नेशः स्वानंदैकरसो ह्ययम् ॥९८॥ अखंडैकरसानंदो मुक्तोऽयं स्वात्मदृष्टितः ॥ संसारिदृष्ट्या सर्वेश इति विद्धि प्रतर्दन ॥९९॥ इंद्रानुग्रहतः सोऽभूत्कृतकृत्यः प्रतर्दनः॥एतद्व्याख्यानतस्तुष्याद्विद्यातीर्थमहेश्वरः॥१००॥

इति श्रीविद्यारण्यविरचिते अनुभूतिप्रकाशे कौषीतकीशाखाविवरणे इंद्रप्रतर्दनसंवादो नाम अष्टमोऽध्यायः ॥८॥

राजा बालाकये प्राह विप्राय ब्रह्मवेदनम् ॥ कौषीतक्याख्यशाखायामत्र स्पष्टीकरोमि तत् ॥१॥ दृप्तो बालाकिरपरब्रह्मवित्स कदाचन ॥ अजातशत्रुं काशीशं बुबोधयिषुरागतः ॥२॥ अजातशत्रुर्ब्रह्मात्मवेदनाच्छौर्यतोऽपि च ॥ अंतर्बहिश्च निःशत्रुः काश्यां राजा बभूव सः ॥३॥ गर्गगोत्रजविप्रोऽयं बालाकिर्नैव तत्त्ववित् ॥ किंतु प्राणोपासकोऽयं दर्पेण महताावृतः ॥४॥ राजन्बुभुत्सवे तुभ्यं परं ब्रह्म ब्रवाण्यहम् ॥ इत्युक्त्वादित्यपुरुषं ब्रह्मोपास्वेत्यवोचत ॥५॥

राजा निवार्य तं प्राह फलं ध्येयगुणानपि ॥ एवं पंचदश ब्रह्माण्य-
ध्यत्रासाववोचत ॥६॥ चंद्रे विद्युति मेघे खे वायावग्नौ जलेऽपि
च ॥ आदर्शे श्रवणे गंतृशब्दे छायाकृतावपि ॥७॥ देहे स्वप्ने दक्षि-
णेऽक्षिण्यपि वामेऽब्रवीत्क्रमात् ॥ सर्वत्र राज्ञा प्रत्युक्तो विप्रस्तूष्णी-
मवस्थितः ॥८॥ अजातशत्रू राजा तं परब्रह्मविदुक्तवान् ॥ परब्रह्म
वदिष्यामीत्युक्तिस्तव मृषा भवेत् ॥९॥ जगतः पुरुषाणां च कर्तृ
ब्रह्मेति बुध्यताम् ॥ बालाकिः परविद्यार्थं राजानमुपसन्नवान्॥१०॥
राजा नांगीचकारैतत्स्वजातेरधमत्वतः ॥ गुरुत्वं नास्ति मे तुभ्यं
ब्रह्म विज्ञापयाम्यहम् ॥११॥ इत्युक्त्वा पाणिना विप्रमादायांतःपुरं
गतः ॥ सूत्रात्मैव परं ब्रह्म प्राणो जीव इतीदृशः ॥१२॥ बालाके-
र्निश्चयस्तस्य व्यावृत्त्यै स्पष्टमाह तम् ॥ सुषुप्ते पुरुषे प्राणो न लीन-
श्चक्षुरादिवत् ॥१३॥ जीवश्चेत्प्रतिबुध्येत समाहूतः स्वनामभिः ॥ इति
मत्वाह्वयत्प्राणं शास्त्रीयैस्तस्य नामभिः ॥१४॥ नोत्तस्थौ स पुमान्
किंतु शिष्य एवात्र पूर्ववत् ॥ यष्ट्यासौ ताडितः सुप्तः समुत्तस्थौ त्वरा-
न्वितः ॥१५॥ यथा भस्मावृतो वह्निर्वायुना ज्वाल्यते तथा ॥ प्राणो
नात्मा बोधहीनो घटवद्यस्तु बुध्यते ॥१६॥ इंद्रियैः सहितो भोक्ता
जीवोऽसौ चेतनत्वतः ॥ द्वा सुपर्णेति मंत्रेण चेतनौ द्वावुदीरितौ
॥१७॥ तयोरन्यतरो भोक्ताऽनश्नन्नन्यः प्रकाशते ॥ चिच्छायावा-
नहंकारो व्याप्तो जागरणे पुमान् ॥१८॥ इंद्रियैर्विषयान् भुंक्ते तं
बोद्धारमबुध्यत ॥ प्राणात्मवाद्यसौ भोक्तृबोधेनैवातिविस्मितः॥१९॥
बुद्धं ब्रह्मेति संतुष्टो नान्यत्प्रष्टुमपैक्षत ॥ ज्ञापयिष्येऽहमित्येवं राज्ञा
तस्मै प्रतिश्रुतम् ॥२०॥ शिष्टं बोधयितुं तस्मात्स्वयं प्रश्नांश्चकार
सः ॥ मंदधीरपि यः श्रोता श्रद्धालुर्विनयान्वितः ॥२१॥ अपृष्टे-

नापि वक्तव्या तस्मै विद्येति शास्त्रधीः ॥ यो भोक्ताऽत्रोत्थितः सोऽयं काऽशयिष्ट पुरा क्व वा ॥ २२ ॥ अभूद्धीरहिता सुप्तिः कुतो वाऽगादयं पुमान् ॥ बालाकिना अविज्ञातमिदं सर्वमिति स्वयम् ॥२३॥ निश्चित्य त्रितयस्यास्य निर्णयं स्पष्टमब्रवीत् ॥ हृदयं कमलाकारं देहमध्येऽस्त्यधोमुखम् ॥२४॥ नाड्यस्तस्माद्विनिर्गत्य व्याप्नुवंत्यखिलं वपुः ॥ अहंकारोपाधिरात्मा जीवो भूत्वा हृदि स्थितः ॥२५॥ नाडीभिः प्रसृतः सोऽक्षैर्जानन् जागरणे स्थितः ॥ बाह्यभोगप्रदं कर्म यदा क्षीणं तदा पुनः ॥२६॥ वासनाभोगदे कर्मण्युद्बुद्धे स्वप्नभाग्भवेत् ॥ स्वप्ननाडीष्ववेक्ष्याथ कर्मणोऽस्यापि संक्षयात् ॥२७॥ हृदि संकोचमाप्नोति सा सुषुप्तिरितीर्यते ॥ नाडीमूलानि हृत्पद्मे पुरीतद्वेष्टितेऽवसन् ॥२८॥ यानि तेषु प्रविश्यांतर्लीयते परमात्मनि ॥ परमात्मा स्वतः पूर्णः सच्चिदानंदलक्षणः ॥२९॥ सोऽहंकारपरिच्छिन्नो जीवत्वारोपवान्भवेत् ॥ अज्ञानकार्योऽहंकारोऽवस्थितः फलभुक्तये ॥३०॥ फलदे कर्मणि क्षीणे लीयतेऽसौ स्वकारणे ॥ पूर्णैक्यमवाप्नोति परिच्छिन्नो यथा घटे ॥३१॥ नष्टे घटाकाश ऐक्यं वियता महता व्रजेत् ॥ यदा न कंचन स्वप्नं पश्येत्सुप्तस्तदाऽखिलम् ॥३२॥ विषयेंद्रियजातं यत्तत्प्राणे प्रविलीयते ॥ प्राणशब्दो वायुमाह परमात्मानमप्यसौ ॥३३॥ प्रविष्टचेष्टाहेतुत्वमुभयत्रापि विद्यते ॥ वायौ श्वासक्रियाः सर्वाः सृष्टिस्तु परमात्मनि ॥३४॥ दृष्टिभेदाद्वयोश्चाक्षलयो वक्तुं हि शक्यते ॥ सुप्तस्याक्षलयः प्राणवायाविति तटस्थधीः ॥३५॥ अद्वैते द्वैतविलयं मन्यते सुप्त उत्थितः ॥ सुप्ताभिप्रायमाश्रित्य परात्मनि जगल्लयः

१ इंद्रियाणि । २ नाडीषु । ३ अज्ञाने । ४ वाय्वात्मनोः ।

॥३६॥ श्रुत्युक्तस्तेन पूर्वोक्तप्रश्नयोरुत्तरं भवेत् ॥ कैषोऽशयिष्ट कुत्रेयं सुप्तिस्तत्रोत्तरं क्रमात् ॥३७॥ परात्मन्यशयिष्टाऽभूदज्ञाने सुप्तिरित्यदः ॥ परिच्छिन्नस्य पूर्णात्मतादात्म्यं शयनं भवेत् ॥३८॥ साहंकारस्य जगतो विलयः सुप्तिरुच्यते ॥ कुत आगादिति प्रश्नस्योत्तरं दृश्यतामिदम् ॥३९॥ अज्ञानेनावृतात्पूर्णादागच्छति परात्मनः ॥ यदा प्रबुध्यते सुप्तस्तदाग्नेर्विस्फुलिंगवत् ॥४०॥ प्राणा यथायथं तस्माज्जायंते परमात्मनः ॥ प्राणाभिमानिदेवानामक्ष्यादीनां जनिस्ततः ॥४१॥ लोक्यंते विषया अक्षैस्ते[1] देवेभ्यः समुद्गताः ॥ सर्वसाधारणः सर्ग एकः प्रातिस्विकोऽपरः ॥४२॥ आकाशादिक्रमादाद्यः प्राणादिक्रमतोऽपरः ॥ सर्वेषां प्राणिनां कर्मक्षये स्यात्मलयो महान् ॥४३॥ पुनः कर्मोद्भवे तेषां स्यान्महासृष्टिरीश्वरात् ॥ एकस्य कर्मणि क्षीणे प्रलयः सुप्तिनामभृत् ॥४४॥ पुनः कर्मोद्भवे तस्य सृष्टिः स्याज्जागराभिधा ॥ अद्वैततत्त्वबोधाय सृष्टिः सर्वत्र कथ्यते[3] ॥४५॥ अल्पा सा महती वास्तु सदद्वैतं[2] विबुध्यते ॥ प्रौढस्य राजगेहस्य द्वारं स्यात्पुरतो महत् ॥४६॥ पृष्ठतोऽतःपुरद्वारं चोरद्वाराख्यमल्पकम् ॥ महाद्वारेण सहसा दुर्लभं राजदर्शनम् ॥४७॥ जनसंमर्दबाहुल्याद्वाराणां च बहुत्वतः ॥ अल्पद्वारे स्वामिभक्तो हठाद्राजानमीक्षते ॥४८॥ दृष्टिसृष्ट्यानुभूत्यर्थी[4] वेत्त्यात्मानं तथा हठात् ॥ महासृष्ट्या तत्पदार्थमादौ ज्ञात्वा तथा पुनः ॥४९॥ त्वंपदार्थं शोधयित्वा वाक्याद्बोधो विलंबते ॥ तस्मादिहाजातशत्रुर्बालाकेरविलंबतः ॥५०॥ प्रत्यग्ब्रह्मत्वबोधार्थं दृष्टिसृष्टिमवोचत ॥

---

१ इंद्रियेभ्यः । २ तत्तद्रूपेण जायमानः । ३ सर्वत्र हि श्रुतौ विरुद्धं सृष्टिगानं श्रूयते तत्कथं श्रद्धातव्यमित्याशङ्कायां नहि श्रुतिः सृष्टिक्रमं प्रतिपादयितुं प्रवृत्ता अपित्वद्वैतात्मतत्त्वं तत्तु सर्वत्रैकरूपेणैव प्रतिपादितमित्याशयः । ४ पुरुषः ।

सुप्तावासीद्यदज्ञानमहंकारलयोऽत्र हि ॥५१॥ सोऽहंकारः कर्मभोग-
काले स्यात्पुनरुद्गतः ॥ तेनावच्छिन्न आत्मापि कर्ता भोक्तापि पूर्व-
वत् ॥५२॥ भोक्तुरात्मन उत्पन्नं भोगसाधनमिंद्रियम् ॥ इंद्रियप्रे-
रको देवानुग्रहस्तत उद्गतः ॥५३॥ अक्षेभ्योऽनुगृहीतेभ्यो लोका
भांति समुद्गताः ॥ सेयं प्रातीतिकी सृष्टिस्तस्माज्जाता ततः स्वयम्
॥५४॥ जगत्कर्ता परात्मेति क्षणाद्बालोऽपि बुध्यते ॥ ईश्वरो महि-
मोपेतः सोऽप्यत्र इति वासना ॥५५॥ धीमतां चिरमारूढा विय-
दादिक्रमस्ततः ॥ किं बहूक्त्याऽस्तु या काचित्सृष्टिः सा मायिकी
तत: ॥५६॥ अद्वितीयानंद आत्मा सुषुप्तावनुभूयते ॥ अहंकारो
मायिको यस्तदवच्छिन्नचेतनः ॥५७॥ आत्मा जागरणे कृत्स्नमा-
नखं व्याप्नुयाद्वपुः ॥ गूढोऽग्निररणौ व्यापी तथा सुप्तौ चितिर्वपुः
॥५८॥ व्याप्नोत्यविद्यया गूढा जागरे क्षुरवत्स्थिता ॥ नापितस्य
क्षुराः पात्रे स्पष्टा भांति पृथक् स्थिताः ॥५९॥ चक्षुरादिषु चिल्लेखाः
स्पष्टा भांति पृथक् तथा ॥ सर्वेऽपि करणात्मानः कर्त्रात्मानमिमं
सदा ॥६०॥ अनुसृत्यैव तिष्ठंति श्रेष्ठिनं स्वजना इव ॥ पुत्रमित्रा-
दिभिः स्वीयैः सार्धं श्रेष्ठी धनी सदा ॥६१॥ भुंक्ते तेऽपि तदिष्टार्थं
कुर्वंतो भोजयंति तम् ॥ एवं जीवः स्वकीयाक्षैः सार्धं शब्दादिका-
न्सदा ॥६२॥ भुंक्तेऽक्षाणि च शब्दादीन् गृह्णंति स्वामितुष्टये ॥
यत्र तिष्ठति भोक्तासौ सुप्तौ जागरणे पुनः ॥६३॥ यस्मादुदेति
सोऽद्वैतः परमात्मेति बुध्यताम् ॥ इत्थमद्वैतबोधार्थमहंकारे परे-
श्वरः ॥६४॥ स्पष्टचित्प्रतिबिंबोऽभूदिति श्रुत्यंतरे श्रुतम् ॥ नामरू-

---

१ ईश्वरात् । २ चितिः । ३ श्रेष्ठिनं पुरुषम् । ४ ते पुत्रमित्रादयः ।
५ श्रेष्ठिनं पुरुषम् । ६ अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीत्यादौ ।

द्वैतमात्मानमिंद्रो नैव विजज्ञिवान् ॥६५॥ असुरा बहिरंतस्थास्तावदभ्यभवन्निमम् ॥ बहिष्ठा असुराः स्वर्गे स्थितमेनं बबाधिरे ॥६६॥ आंतरा असुराश्चित्ते कामाद्या दुःखदायिनः ॥ यदा विजज्ञावात्मानमसुरानखिलांस्तदा ॥६७॥ हत्वा जयेन देवानां श्रैष्ठ्यं स्वाराज्यमाप्तवान् ॥ अजातशत्रुतामेति जातब्रह्मात्मबोधतः ॥६८॥ अंतर्बहिर्वा कः शत्रुर्मम सर्वात्मदर्शिनः ॥ ब्रह्माद्याः स्थावरांता ये प्राणिनो मम ते वपुः ॥६९॥ कामक्रोधादयो दोषा जायेरन्मे कुतोऽन्यतः ॥ असुराणां स्वात्मताप्तावसुरत्वं हतं भवेत् ॥७०॥ अयमेव जयस्तस्य देवेभ्यः श्रेष्ठता ततः ॥ अद्वैतमपराधीनं स्वाराट् स्यात्तेन तत्त्ववित् ॥७१॥ आत्मानं बोधयित्वैषामधिपोऽधिकपालनात् ॥ नैतदिंद्रस्य माहात्म्यं किंतु ज्ञानस्य तत्त्वतः ॥७२॥ अन्योऽप्यद्वैतमात्मानं वेत्ति चेदिंद्रवद्भवेत् ॥ अजातशत्रुर्बालाकिं विप्रमित्थमबोधयत् ॥७३॥ तथैवोत्तमतागर्वं त्यक्त्वा जानीत बुद्धिमान् ॥ विद्वानप्युपसन्नाय दद्याद्विद्यां महादरात् ॥७४॥ देयात्ताभ्यां स्वभावं तं विद्यातीर्थमहेश्वरः ॥७५॥ इति श्रीविद्यारण्यविरचिते अनुभूतिप्रकाशे कौषीतकीशाखोपनिषद्विवरणो नाम नवमोऽध्यायः ॥९॥

मैत्रायणीयनाम्नी या शाखा सा याजुषी मता ॥ तस्यां शाकायन्यमुनिर्बोधयामास भूपतिम् ॥१॥ बृहद्रथः स्वस्य राज्ये पुत्रं संस्थाप्य निर्गतः ॥ वने महत्तपस्तप्त्वा विद्यार्थं मुनिमाययौ ॥२॥ अशाश्वतं शरीरं मे कदा यायात्ततः पुरा ॥ ज्ञास्याम्यात्मानमात्मज्ञो मुनिर्मां बोधयिष्यतु ॥३॥ इत्यभिप्रेत्य साष्टांगं प्रणिपत्य भुवि स्थितः ॥ वृणीष्व वरमित्युक्तो वृतवानात्मवेदनम् ॥४॥ राज्ञां

१ एतदमृतमभयद्ब्रमेत ज्ञेत्यादिरूपेण विजज्ञौ ।

भोगप्रधानानामात्मज्ञानं सुदुःशकम् ॥ वृणीष्व कामानित्युक्तः स मुनेः पादमग्रहीत् ॥५॥ पादं स्वमूर्ध्र्यवस्थाप्य स्ववैराग्यं प्रकाशयन् ॥ आधारे करणे दोषानवोचद्भोक्तृभोगयोः ॥६॥ भोगाधिकरणं देहस्तस्य दोषा इमे स्फुटाः ॥ अस्थिचर्मस्नायु[1]मज्जामांसशुक्रादयोऽखिलाः ॥७॥ बीभत्सा करणेष्वेषु मज्जतां[2] भुज्यते कथम् ॥ विट्पूर्णखाते मग्नः सन् भुंक्ते कोऽपि न बुद्धिमान् ॥८॥ पुरा त्वविद्ययाच्छन्नदोषोऽहं भुक्तवांस्ततः ॥ बालोऽपि मूढो यत्किंचिद्द्याद्विष्ठादिकं तथा ॥९॥ भोगाधिकरणे दोषा आसतां भोगसाधने ॥ चित्तेऽपि बहवो दोषा वर्तंते हि निरंतरम् ॥१०॥ कामक्रोधौ लोभमोहौ विषादेर्ष्याभयादयः ॥ ये संत्येतैस्त्रस्तचित्ते भोगिनः किं सुखं भवेत् ॥११॥ श्रूयतां भोक्तृदोषाश्च भोक्तारो बहवो मताः ॥ देहाभिमानिनो जीवा उत्तमा मध्यमाधमाः ॥१२॥ दरिद्रा अधमा ज्ञेया मध्यमाश्चक्रवर्तिनः ॥ गंधर्वाद्या उत्तमाः स्युस्ते सर्वेऽपि क्षयिष्णवः[4] ॥१३॥ उत्पन्नध्वंसिनो यद्वत्स्युर्दंशमशकादयः ॥ तथैव सर्वभोक्तारो म्रियंते स्वायुषः क्षये ॥१४॥ भोक्ता न म्रियते किंतु देह एवेति चेच्छृणु ॥ देहस्थस्यैव भोक्तृत्वं तन्नश्येद्वपुषा सह ॥१५॥ दरिद्राणां भोगहेतुः श्रीर्भृत्याश्च न संत्यथ ॥ सुद्युम्न[5]प्रमुखानां ते विद्यंते चक्रवर्तिनाम् ॥१६॥ इति चेत्संतु सर्वेषां मिषतां[6]मिव मध्यगः ॥ म्रियते चक्रवर्ती तां संत्यज्य महतीं श्रियम् ॥१७॥ अंतर्धाना[7]दिशक्तिश्चेद्गंधर्वादिषु विद्यते ॥ विद्यतां नाम मृत्युस्तु तेषां शास्त्रेषु कथ्यते ॥१८॥ भोक्तॄणां नश्वराणां को भोगः स्यान्मृत्यु-

१ नाडी । २ दुर्गंधाः । ३ पुरुषेण । ४ नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं चाविशन्तीति श्रुतेः । ५ मुनिः शंकते । ६ पश्यताम् । ७ मुनिः शंकते ।

चिंतया ॥ शयानो भुवि नो कश्चिन्मुमूर्षुर्धनमिच्छति॥१९॥तिष्ठत्यसौ भोक्तृदोषो भोग्येऽपि श्रूयतामयम् ॥ अब्धिगिर्यादिकं सर्वं नश्वरं किमुतेतरत् ॥२०॥ दोषान् सोढ्वा सकृद्भुक्तः संसारो नश्यतीति चेत् ॥ न भोगैराश्रितस्यास्य संसारावृत्तिदर्शनात् ॥२१॥ भोगकाले कृतं कर्म कुतो जन्म ददाति नो ॥ अंधकूपस्थितो भेक इवाहं संसृतिस्थितः ॥२२॥ संसारकूपपतितमस्मादुद्धर्तुमर्हसि ॥ त्वमेव गतिरस्माकमन्या कापि न विद्यते ॥२३॥ राज्ञोऽस्य तीव्रवैराग्यं दृष्ट्वा मुख्याधिकारिताम् ॥ तमाह कृतकृत्यस्त्वमात्मज्ञोऽसि न संशयः ॥२४॥ यज्ञदानादि कृत्यं ते जातं विविदिषोदयात् ॥ सफलं न पुनः कर्म कर्तव्यं तेऽत्र विद्यते ॥२५॥ विषयासक्तिरेवास्य ज्ञानस्य प्रतिबंधिका ॥ एषा तु नास्ति ते ज्ञानं हस्तप्राप्तमिव स्थितम् ॥२६॥ संसारहेयतां बुद्ध्वा त्यक्ते तस्मिन्नशेषतः ॥ योऽवशिष्टो भाति सोऽयमेवात्मेत्यवगच्छ भोः ॥२७॥ अवशिष्टोऽयमात्मासावहमित्येव गम्यते ॥ मतभेदादहंबुद्धिर्बहुष्वस्त्यत्र को भवेत् ॥२८॥ देहः कर्ता च साक्षीति त्रयो वादिभिरीरिताः ॥ आत्मानस्तेषु कतमो भवतोऽभिमतो वद ॥२९॥ साक्ष्यात्माभिमतो नान्यौ तयोर्दोषास्त्वयेरिताः ॥ संसारांतः पातिनौ तौ न तयोरात्मतोचिता ॥३०॥ चाक्षुषव्यवहारेऽस्य भासकत्वेन साक्षिता ॥ विवेक्तुं शक्यते तस्मादक्ष्युपाधौ स उच्यते॥३१॥देहमध्येऽस्ति हृत्पद्मं नाडीयुतमधोमुखम् ॥ नाड्यस्तूर्ध्वमधश्चैतं देहं व्याप्य व्यवस्थिताः ॥ ३२ ॥ अहंकारोऽत्र चिद्युक्तः कर्ता भोक्ता हृदि स्थितः ॥ मनोंतःकरणं स्थित्वा हृदि वृत्त्या बहिर्व्रजेत्॥३३॥ रश्मिवत्प्रसृता वृत्तिर्नाड्याप्रोत्यक्षिगोलकम्॥ अस्वतंत्रा बहिश्चक्षुरिंद्रियेण सह व्रजेत् ॥३४॥ वृत्त्यवच्छिन्नचैतन्यं

घटाकाशवदेतया ॥ वृत्त्या सह बहिर्गत्वा तत्राज्ञानं नुदेत्क्षणात्[1] ॥३५॥ तद्वृत्त्यागमनात्पूर्वमज्ञानेन समावृतम् ॥ बाह्यं जगत्तदज्ञानं तया वृत्त्याऽपसार्यते[2] ॥३६॥ वर्तिनिष्ठो यथा दीपस्तमो नाशयते तथा ॥ चैतन्यं वृत्तिनिष्ठं यत्तदज्ञानस्य नाशकम् ॥ ३७ ॥ एष हृन्निष्ठचैतन्यपदार्थोऽक्ष्णा बहिर्गतः ॥ व्याप्नुवन्निखिलं तत्र व्यथां नाप्नोति कांचन ॥३८॥ प्रतिकूलात्तु विषयाद्या व्यथा सा तु मानसी ॥ न चैतन्यगतेत्येवमाचार्याः स्पष्टमब्रुवन् ॥३९॥ दुःखी यदि भवेदात्मा कः साक्षी दुखिनो भवेत् ॥ दुःखिनः साक्षिता नैव साक्षिणो दुःखिता तथा ॥४०॥ नर्ते स्याद्विक्रियां दुःखी साक्षिता का विकारिणः ॥ धीविक्रियासहस्राणां साक्ष्यतोऽहमविक्रियः ॥४१॥ यः साक्षी चित्पदार्थोऽसौ जीवात्मा तस्य जीवता ॥ अहंकारेण तादात्म्यभ्रांत्यैव परिकल्पिता ॥ ४२॥ आत्माहंकारदेहाभ्यां युक्तः कलुषितः पुरा ॥ विवेचितः स्थूलदेहादीषदेव प्रसीदति ॥४३॥ बोधयित्वा जीवतत्त्वं जीवस्य ब्रह्मरूपताम् ॥ बोधयामास सोऽप्यात्मा स्वेन रूपेण तिष्ठति ॥४४॥ अहंकाराद्विविक्तश्चेत्तदा सम्यक् प्रसीदति ॥ आधिव्याध्याख्यकालुष्यं न चिन्मात्रेऽस्ति किंचन ॥४५॥ एष साक्षीसंप्रसादो देहद्वयसमुत्थितः ॥ शास्त्रसिद्धं परं ब्रह्म ज्योतिः प्राप्नोति वाक्यतः ॥४६॥ मत्तोऽन्यद्ब्रह्म परमं स्वप्रकाशमिति भ्रमः ॥ पुरासीत्तत्त्वमस्यादिवाक्येनासौ निवर्तते ॥४७॥ अब्रह्मत्वभ्रमापायो ज्योतिःप्राप्तिरितीर्यते ॥ ततोऽयं ब्रह्मणा स्वेन रूपेण व्यवतिष्ठते ॥४८॥ एवं व्यवस्थिते योऽसावात्मानुभवगोचरः ॥ स एव मृतिभीत्यादिरहितं ब्रह्म नेतरत् ॥४९॥

---

१ नाशयेत् । २ दूरीक्रियते ।

श्रवणं मननं ध्यानं विद्यायाः साधनं त्रयम् ॥ अज्ञानं संशयो भ्रांतिरित्येतेषां निवर्तकम् ॥५०॥ गुरूपदेशश्रवणादज्ञानं विनिवर्तते ॥ उपपत्तिपरामर्शात्संशयानां निवर्तनम् ॥५१॥ निरंतरध्यानतस्तु नश्यति भ्रांतिवासना ॥ राजन् ते श्रवणं जातं मननं कुरु यत्नतः ॥५२॥ प्रमाणे संप्रदाये वा तत्त्वे वा संशयो भवेत् ॥ उदितेऽनुदिते वेति होमः शाखाद्विकल्पितः ॥५३॥ न तथा ब्रह्मविद्येयं सर्वोपनिषदीरणात् ॥ न प्रमाणे संशयोऽतः संप्रदायेऽपि नास्त्यसौ॥५४॥ शाखाप्रवर्तको मैत्रो ब्रह्ममाह न चापरः ॥ सोऽपि किंचिदुपाख्यानमुदाहृत्य समाब्रवीत् ॥५५॥ तत्त्वस्य संशयोऽपैति तदाख्यानमिदं शृणु ॥ मुनयो वालखिल्या ये ते प्रजापतिमब्रुवन् ॥५६॥ अचेतनं शरीरं तत्केन चेतनवत्कृतम् ॥ प्रेरको वास्य को ब्रूहीत्युक्तः प्रत्यब्रवीदसौ ॥५७॥ वेदानामुत्तरे भागे श्रूयते परमेश्वरः ॥ स करोत्युभयं तस्य तात्त्विकं[१] रूपमुच्यते ॥५८॥ अज्ञानमिश्रणाभावात् शुद्धः पापविवर्जनात् ॥ पूतो रूपेण नाम्ना च हीनत्वाच्छून्यमुच्यते ॥५९॥ शांतः क्रोधादिराहित्यादप्राणोऽचेष्टकत्वतः ॥ ईशत्वोपाधिराहित्यादनीशात्मा स्वतो भवेत् ॥६०॥ कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ॥ कार्यकारणतां हित्वा पूर्णबोधोऽवशिष्यते ॥६१॥ देशात्कालाद्वस्तुतश्च परिच्छेदविवर्जनात् ॥ अनंतोपक्षयाभावादक्षयोऽचलनात्स्थिरः ॥६२॥ नित्यस्फुर्त्या शाश्वतोऽयमजो जन्मादिवर्जनात् ॥ स्वतंत्रो न पराधीनः स्वमहिम्नैव तिष्ठति ॥६३॥ महिमाश्चर्यरूपत्वादखंडैकरसात्मता ॥ आधारांतरराहित्यात्स्थितिरत्रोपचर्यते ॥६४॥ अनिच्छस्येदृशस्यैतद्देहनिर्वहणं कथम् ॥ इति चेत्स्वांशरू-

१ परमेश्वरस्य यथार्थरूपम् ।

पेण देहेऽवस्थाय निर्वहेत् ॥६५॥ स एवोक्तो देहसाक्षी विद्वद्भिरनुभूयते ॥ नेतरैः सूक्ष्मरूपोऽयमिंद्रियाविषयत्वतः ॥६६॥ पूर्णत्वात्पुरुषाख्येऽसौ देहे स्वांशेन वर्तते ॥ बुद्धिपूर्वं यथा सुप्तः स्वेच्छया प्रतिबुध्यते ॥६७॥ अध्यापकः प्रदोषेषु मध्यरात्रे प्रबुध्यते॥ स्वेच्छया परमात्मापि तथात्रांशेन वर्तताम् ॥ ६८ ॥ प्रतिदेहं तु चिन्मात्रो घटाकाश इव स्थितः ॥ देहं साक्षितया जानन् क्षेत्रज्ञ इति कथ्यते ॥ ६९ ॥ संकल्पाध्यवसायाभिमानैरेषोऽनुमीयताम् ॥ सर्वैरक्षैरुपेतत्वात्संकल्पाद्यस्य संभवेत् ॥७०॥ तेनावच्छिन्नचैतन्यरूपेणेदं वपुः सदा ॥ चेतनीकृत्य कार्येषु प्रेर्यतेऽश्वैर्यथा रथः॥७१॥ अखंडैकरसस्यांशो नेति चेच्छ्रूयतामिदम् ॥ अखंडैकरसात्मैव माययेश्वरतामगात् ॥७२॥ मायाया अनृतत्वेन नाखंडत्वं विरुध्यते ॥ मायायां स्वच्छरूपायामात्मायं प्रतिबिंबति ॥ ७३ ॥ तदुपाधिक ईशोऽभूत्सृष्टेः प्रागेक एव सः ॥ अतो नारमतैकाकी राजामात्यादिको यथा ॥ ७४ ॥ द्यूतक्रीडामिवेशोऽसौ सृष्टिक्रीडामवैक्षत ॥ द्रव्यांतरमुपादानमदृष्ट्वा स्वं व्यचारयत् ॥७५॥ बहुस्यामहमेवात्र प्रजारूपीति चिंतयन् ॥ देहानसृजत स्थूलान्पाषाणप्रतिमा इव॥७६॥ स्वयमेव यथा स्वप्ने गिरिनद्यादिरूपतः ॥ कल्पितो भात्यसावात्मा भात्वेवं बहुरूपतः ॥७७॥ ज्ञानक्रियाशक्तिहीना देहाः क्रीडार्थमक्षमाः ॥ इत्यालोच्य क्रियाशक्तिः प्राणो भूत्वांतराविशत् ॥७८॥ श्वासाधोगत्यन्नसाम्योद्गारादिव्याप्तिसिद्धये ॥ पंचधा व्यभजत्प्राणं प्राणोपाधिक ईश्वरः ॥७९॥ उपांश्वंतर्यामिसंज्ञौ ग्रहौ द्वौ सोमयाजिनः ॥ नियतौ तद्वदुच्छ्वासनिश्वासौ प्राणिनामपि॥ ८० ॥ लोहकारः स्वहस्ताभ्यां पर्यायेण दृतिद्वयात् ॥ वह्निं ज्वालयते यद्वज्ज्वा-

ठरो ज्वाल्यतेऽनलः ॥८१॥ निश्वासोच्छ्वाससंदीप्तो भुक्तं पाचयतेऽनलः ॥ ईशस्य जाठराग्नित्वाकारो भगवतेरितः ॥ ८२ ॥ अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ॥ प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥८३॥ कर्णौ पिधाय यं घोषं शृणोत्यंतः स जाठरान् ॥ वह्नेर्जातो मुमूर्षुस्तु नैनं घोषं शृणोति हि ॥८४॥ औष्ण्योपेतं पंचविधा प्राणलिंगाभिधं वपुः ॥ प्राणोपाधिकचिद्रूपो ज्ञानशक्त्यापि युज्यते ॥८५॥ ततो मनोमयो भूत्वा सत्यसंकल्पतां व्रजेत् ॥ यत्संकल्पयते जीवस्तत्करोत्येव सर्वथा ॥८६॥ हृदि स्थितः सन् शब्दादीन् भुंजेऽहं विषयानिति ॥ संकल्प्याक्षाणि सृष्ट्वा तैर्भुंक्तेऽक्षैर्विषयान्सदा ॥८७॥ देहो रथः पंच हयास्तस्य कर्मेंद्रियाणि हि ॥ ज्ञानेंद्रियाणि यानि स्युस्तानि बंधनरज्जवः ॥८८॥ मनोऽत्र सारथिः सर्वैरवच्छिन्नेशतां व्रजन् ॥ चिदात्मा चेतनं देहं कृत्वा प्रेरयते सदा ॥८९॥ तस्यापाये[1] मृतो देहोऽचेतनो न प्रवर्तते ॥ चिदंशस्य प्रेरकत्वं ब्रवीति भगवान् स्फुटम् ॥९०॥ ममैवांशो जीवलोके जीवभूतः सनातनः ॥ मनःषष्ठानींद्रियाणि प्रकृतिस्थानि कर्षति ॥९१॥ अवच्छिन्नश्चिदात्माऽसौ स्वतो नेच्छति किंचन ॥ न भुंक्ते सुखदुःखे च तस्मिन्नारोप्यतेऽखिलम् ॥९२॥ सर्वेष्वपि शरीरेषु भाति तद्धर्मवानिव ॥ न तिष्ठति स्वतस्तेषु नापि तद्धर्मसंयुतः ॥९३॥ ज्ञानेंद्रियैर्न दृश्योऽयं ग्राह्यः कर्मेंद्रियैर्न च ॥ स्वरूपसौक्ष्म्याद्व्यक्तो वेदांतैरेव बुध्यते ॥९४॥ निर्ममत्वात्सर्वगोऽपि शरीरेषु च तिष्ठति ॥ अकर्ताऽप्यनभिज्ञैस्तु कर्तेवासौ विभाव्यते ॥९५॥ वेदानामुत्तरे भागे इत्यादिग्रंथवर्णितम् ॥ आत्मनो वास्तवं रूपं कर्तृत्वं नास्य विद्यते

---

१ अपाये दूरगमने सति ।

॥९६॥ स सर्वोपनिषत्सिद्ध एष हृद्युपलभ्यते ॥ शुद्धः स्थिरोऽचलो नास्य कर्मलेपोऽस्ति कश्चन ॥९७॥ अव्यग्रो[1] निस्पृहस्तूष्णीमुदासीन इव स्थितः ॥ स्वस्थो विक्षेपराहित्यादित्यात्मानं प्रपश्यत ॥९८॥ ईदृशोऽप्ययज्ञदृष्ट्याऽसौ सत्वादिगुणधारिणा ॥ मायापटेन संछन्नो भुंजान इव लक्ष्यते ॥९९॥ इत्थं बोधितवानेष वालखिल्यान्प्रजापतिः ॥ तत्त्वं बुध्वाऽथ पप्रच्छुः कः संसारीति ते गुरुम् ॥१००॥ श्रूयतां परमात्मोक्तस्तस्मादन्योऽस्ति कश्चन ॥ भूतात्माख्यो निकृष्टोऽयं पुण्यपापफलैर्युतः ॥१॥ विप्रक्षत्रादिसद्योनिं श्ववराहादिकामपि ॥ असद्योनिमवाप्नोति भूलोके जन्म चेत्तदा ॥२॥अन्यत्र जन्म चेत्तर्हि पुण्येन स्वर्गमश्नुते ॥ पापेन नरकं द्वंद्वैरभिभूतः परिभ्रमेत् ॥३॥ मानावमानौ शीतोष्णे द्वंद्वानीत्यादिकानि हि ॥ यो भूतात्मोदितः सोऽथ विस्पष्टमभिधीयते ॥४॥ अपंचीकृतभूतैर्यज्जातं सूक्ष्मं वपुर्हि तत् ॥ भूतैः पंचीकृतैर्जातं यत्तत्स्थूलमिदं वपुः ॥५॥ ज्ञानाक्षाणां क्रियाक्षाणां वायूनां पंचकत्रयम् ॥ मनोऽहंकार इत्येवं लिंगं सप्तदशात्मकम् ॥६॥ अहंकारे भौतिके यच्चैतन्यं प्रतिबिंबितम् ॥ स भूतात्माऽत्र चिद्बिंबं निर्लेपं ब्रह्म कथ्यते ॥७॥ भूतात्मा प्रकृतेर्जातैर्गुणैरेषोऽभिभूयते ॥ तमोगुणाभिभूतत्वात्स्वात्मस्थं ब्रह्म नेक्षते ॥८॥ अधिष्ठानतया ब्रह्म भूतात्मन्यपि तिष्ठति॥ पद्मपत्रे नीरबिंदुरसंश्लिष्टो यथा तथा ॥९॥ ईदृशोऽपीश्वरो मायायुक्तः सन् प्रेरयत्यमुम् ॥ भूतात्मानं स भूतात्मा विविनक्तीश्वरं न तम् ॥११०॥ सुखैर्वैषयिकैः सत्वगुणोद्भूतैः प्रतृप्यति ॥ उद्रेके रजसः सोऽयं कलुषीक्रियते भृशम् ॥११॥ तदानीमतिचांचल्या-

[1] अचंचलः ।

लुप्यते ह्यखिलात्फलात् ॥ कृषिं प्रक्रम्य तां त्यक्त्वा तपः कुर्वंस्त्य-
जेदद्वः ॥१२॥ तत्तत्फले सस्पृहत्वाद्व्यग्रो नाप्नोत्यसौ सुखम् ॥ अहं-
कारेण बद्धः स्याज्जालेन विहगो यथा ॥१३॥ संसारभ्रमणं तस्य
प्रोक्तं शास्त्रांतरेष्वपि ॥ करणप्रेरकः कर्ता भूतात्मा संसरत्ययम्
॥१४॥ चैतन्येन हि पूर्णेन सोऽतर्व्याप्तस्ततश्चिति ॥ भ्रांत्यारोपेण
संसारस्तत्रासौ न तु वास्तवः॥१५॥दृष्टांतोऽत्राग्निना व्याप्तो लोहपिं-
डोऽभिधीयते ॥ तप्तलोहं मुद्गरेण हतं बहुविधं भवेत् ॥१६॥ अहं-
कारे चिदाभासो भूतात्मा साक्षिभासितः ॥ हन्यमानो गुणैः सत्वा-
दिभिर्बहुविधो भवेत् ॥१७॥ यज्जन्म योनिलक्षाणां भवेच्चतुरशी-
तिषु ॥ सोऽयं बहुविधो भावो लोहे दात्रकुठारवत् ॥१८॥ कुला-
लेन यथा चक्रं तथा मायाविना गुणाः ॥ सत्वादयः प्रेरिताः स्यु-
स्तैश्च जन्मान्यनेकधा ॥१९॥ लोहे मुद्गरघातेन नाग्नेर्बाधस्तथा
गुणैः ॥ भूतात्मोपद्रवेणास्य साक्षिणो नास्त्युपद्रवः ॥१२०॥ एकैक-
देहो नरको भवेद्भूतात्मनो महान् ॥ मैथुनोद्भूत्यादिदोषाः प्रसिद्धा
एव देहिनाम् ॥२१॥ देहे दोषा यथा चित्ते दोषास्तद्वदनेकशः ॥
संमोहाद्यास्तामसाः स्युस्तृष्णाद्या राजसा मताः ॥२२॥ भूतात्मा
तैः प्रेरितः संस्तैस्तैस्तामसराजसैः ॥ कर्मभिर्बहुधा देहानवाप्नोति
पुनः पुनः ॥२३॥ श्रुत्वा संसारिणं वालखिल्या विस्मयमाययुः ॥
संसारस्य प्रतीकारं पप्रच्छुर्मुनयः पुनः ॥२४॥ शाम्येद्भूतात्मता येन
चिदात्मत्वं तु शिष्यते ॥ तमुपायं गुरो ब्रूहीत्युक्तः सन् गुरुरुक्त-
वान् ॥२५॥ नद्यूर्म्यादिकदृष्टांतैः संसारस्याप्यनिष्ठताम् ॥ मिथ्यात्वं
च विनिश्चित्य व्रजेज्ज्ञानाधिकारिताम् ॥२६॥ या वेदेनोदिता विद्या

---

१ इच्छरहितत्वम् ।

सा भूतात्मप्रतिक्रिया[1] ॥ तपो योगः स्तुतिर्बोधश्चोक्तं वेदे चतुष्टयम् ॥२७॥ स्वाश्रमोचितधर्मो यः स एवास्य तपो भवेत् ॥ शांताः स्युर्मोहतृष्णाद्यास्तेन तामसराजसाः ॥२८॥ तच्छांतौ सत्त्ववृद्धिः स्यात्सत्त्वेनैकाग्रता धियः ॥ तयात्मतत्त्वानुभवस्ततो मुक्तो न संसरेत् ॥२९॥ निरिंधनाग्निवच्चित्तं शाम्येद्योगेन कारणे ॥ संस्कारमात्रशेषत्वान्न धीः संसर्तुमर्हति ॥१३०॥ तदानीं जीवचैतन्यं ब्रह्मण्येकीभवेद्यथा ॥ जले जलं वह्निरग्नौ व्योम्नि व्योम स्थितं तथा॥३१॥ अद्वैतमनुभूयास्मिन्समाधौ व्युत्थितः पुनः ॥ स्तुवन्सर्वात्मतां तस्य ब्रह्मणोऽनुस्मरेत्सदा ॥३२॥ कुत्सो मुनिर्यथाऽस्तौषीत्त्वं ब्रह्मेत्यादिना तथा ॥ स्तुवन्नपनुदेद्द्वैतवासनां चिरमाश्रिताम् ॥३३॥ योगाद्द्वैतविज्ञाने वासनायाश्च संक्षये ॥ संत्यज्य जीवताभ्रांतिं परमात्मत्वमाप्नुयात् ॥३४॥ सा भ्रांतिस्तमसा जन्या तमस्त्वाश्रितमात्मनि॥ परमात्मत्वमावृत्य कल्पयेज्जीवताभ्रमम् ॥३५॥ यदावरकमज्ञानमात्माऽस्मिन्प्रतिबिंबति ॥ ईश्वरः प्रतिबिंबोऽसौ सृष्ट्यादीनां प्रवर्तकः ॥३६॥ यदज्ञानं विक्रियते भवत्येष तमोगुणः ॥ दृश्यमानं जगदिदं तम एवाभवत्पुरा ॥३७॥ ईशेन प्रेरितं तस्माद्रजो जलतरंगवत् ॥ रजोऽपि प्रेरितं तद्वत्सत्त्वमेव गुणत्रयम् ॥३८॥ समष्टिरूपोऽहंकारः सत्त्वात्सारः समुद्धृतः ॥ चिद्बिंबप्रतिबिंबाभ्यां युक्तोऽसौ चेतनो भवेत् ॥३९॥ प्रतिदेहं व्यष्टिरूपक्षेत्रज्ञत्वेन तिष्ठति ॥ संकल्पोऽध्यवसायश्च देहे तत्सत्त्वसाधकः॥१४०॥ हिरण्यगर्भो वेदेषु समष्टिव्यष्टिरूपधृक् ॥ श्रूयते यः स सूत्रात्मा प्रजापतिरिहोदितः ॥४१॥ तस्य श्रेष्ठास्त्रयो देहाः सृष्टयंतस्थितिहेतवः ॥ ब्रह्मा रुद्रो

---

१ नाशहेतुः ।

विष्णुरिति गुणत्रयसमुद्गताः ॥४२॥ यो यः सृजति लोकेऽस्मिन्ब्रह्मा तत्राभिमन्यते ॥ नाशाभिमानी रुद्रोऽयं विष्णुः स्थित्यभिमानवान् ॥४३॥ प्रजापतिस्त्रिधा भूत्वा भूयोऽपि बहुधाऽभवत् ॥ वसुरुद्रादित्यभेदैर्गिरिनद्यादिभेदतः ॥ ४४ ॥ आत्मन्यध्यारोप एवं प्रोक्तो मायाविनिर्मितः ॥ आत्माऽधिष्ठानरूपेण प्रविष्टः सर्ववस्तुषु ॥४५॥ इत्थं विवेचितश्चात्मा भात्याधिक्येन पालकः ॥ नाधिष्ठानं विना किंचिदारोप्यं बाध्यते क्वचित् ॥४६॥ आरोपितस्य सर्वस्याधिष्ठानं तत्त्वमीक्षते ॥ तस्मादंतर्बहिश्चात्मा स्थितः सर्वेषु वस्तुषु ॥४७॥ प्रजापतिर्वालखिल्यान्मुनीनेवमबूबुधत् ॥ शाकायन्यः कथामेतां राज्ञे प्रोवाच धीमते ॥४८॥ वैराग्यं परमात्माऽत्र जीवात्मा साधनानि च ॥ तपो योगः स्तुतिर्बोध इति सर्वं व्यवस्थितम् ॥४९॥ शाकायन्याय भगवान्मैत्रोऽखिलमुवाच ह ॥ तत्सर्वं मेऽनुगृह्णातु विद्यातीर्थमहेश्वरः ॥१५०॥ इति श्रीविद्या०अनुभू०मैत्रायणीयशाखाविवरणो नाम दशमोऽध्यायः ॥१०॥ ॥

याजुष्यां कठशाखायां विद्यां यां नचिकेतसे ॥ यमः प्रोवाच तां सर्वां संग्रहेण ब्रवीम्यहम् ॥१॥ नचिकेताः कुमारः सन् स्वपित्रा प्रेषितो[1] यमम् ॥ गत्वा तं तोषयित्वात्मज्ञानं वरमयाचत ॥२॥ प्रेते मनुष्ये संदेहो भूयान्मतविभेदतः ॥ पारलौकिक आत्मास्ति नास्ति वा निर्णयं वद ॥३॥ चार्वाका देहमेवाहुः कर्मिणः स्वर्गगामिनम् ॥ मुमुक्षवो मुच्यमानमित्युक्तो गुरुराह तम् ॥४॥ दुर्विज्ञेयमणुत्वात्तद्देवैश्च विचिकित्सितम् ॥ त्यक्त्वैतत्पुत्रवित्तादीन्वृणीष्वेत्युक्त आह तम्

---

१ सहोवाच पितरं तत कस्मै मां दास्यसीति । द्वितीयं तृतीयं त९ होवाच मृत्यवे त्वा ददामीति ।

॥५॥ पुत्राद्या नश्वराः क्लेशहेतवश्चाथ दुर्गमम् ॥ तत्त्वं वक्तुं त्वादृशोऽन्यो नेत्यात्मैव त्वयोच्यताम् ॥६॥ शृणु प्रियं हितं चेति पुरुषैरर्थ्यते द्वयम् ॥ प्रियाः पुत्रादयस्त्वात्मा हितो दुःखविवर्जितः॥७॥ अविवेकविवेकौ द्वौ मार्गौ तत्राविवेकिनः ॥ प्रियार्थिनस्त्वं तु नैवं मत्तो ज्ञानं हितं भज ॥८॥ मूढातिमूढौ न समौ त्वयाऽत्यंतविवेकिना ॥ मूढस्त्वीषद्विवेकी सन्स्वर्गमिच्छति नैहिकम् ॥९॥ तद्गुरुश्च तथैतौ द्वावंधनीतांधवत्स्थितौ ॥ आत्मतत्त्वानभिज्ञत्वादविद्याभ्यंतरे स्थितौ ॥१०॥ अतिमूढो धनार्थी सन्ब्रह्महत्यादिकान्यपि ॥ करोति परलोकस्तु न तस्य प्रतिभासते ॥११॥ चार्वाकैः कर्मिभिश्चात्मा श्रवणायापि दुर्लभः ॥ मुमुक्षवोऽपि बहवः शृण्वंतोऽपि न जानते ॥१२॥ हविर्भुजां हि देवानामप्रियं मर्त्यवेदनम् ॥ मर्त्यास्तत्त्वं न जानंति विघ्नैर्देवकृतैर्हताः ॥१३॥ आचार्यशिष्ययोर्दोषान्देवा उत्पादयंति हि ॥ वाग्दोषाद्बुद्धिदोषाद्वा वक्तुं शक्नोति नो गुरुः ॥१४॥ अविश्वासात्कुतर्काद्वा शिष्यो बोद्धुं न शक्नुयात् ॥ ईश्वरानुग्रहादेवा विहंतुं शक्नुवंति नो ॥१५॥ सहनावित्यादिशांतिजपेनेशप्रसादतः ॥ निर्विघ्नौ गुरुशिष्यौ स्तस्तादृशौ दुर्लभौ खलु ॥१६॥ शब्दार्थज्ञः स्वात्मतत्त्वानुभवी च गुरुर्द्विधा ॥ आद्यो नरो न तु ब्रह्म नरत्वभ्रांत्यनाशनात् ॥१७॥ तेनोक्ते संशया एव स्युर्वाचा बहुयोजनात् ॥ ब्रह्मैवानुभवी तेन ब्रह्म प्रोक्तं विबुध्यते ॥१८॥ कुतर्कान्नश्यते विद्या तार्किको न गुरुस्ततः ॥ आगमे चानुभूतौ च कुशलोऽत्र गुरुर्भवेत् ॥१९॥ शिष्यो बहिर्मुखो न स्यादध्यात्मं

१ अविद्यायामंतरे वर्तमानाः स्वयं धीराः पंडितंमन्यमानाः । दंद्रम्यमाणाः परियंति मूढा अंधेनैव नीयमाना यथांधाः । २ न सांपरायः प्रतिभाति बालं प्रमाद्यंतं वित्तमोहेन मूढं । अयं लोको नास्ति पर इति मानी पुनःपुनर्वशमापद्यते मे ।

योगमाचरन् ॥ दुर्दर्शत्वादिसंयुक्तमप्यात्मानं प्रपश्यति ॥२०॥ बाह्येंद्रियैर्न दृश्योऽयं गूढस्थानप्रवेशतः ॥ पंचकोशगुहांतस्थो गह्वरे तमसि स्थितः ॥२१॥ योगेनांतर्मुखा बुद्धिस्तमो नाशयते ततः ॥ देवं ज्ञात्वा हर्षशोकौ त्यजेत्तद्योग्यतास्ति ते ॥२२॥ योग्योऽहं चेत्तर्हि तत्त्वं रहस्यं यत्त्वमीक्षसे ॥ तद्ब्रूहि सर्वसंसारगुणातीतं विमुक्तये ॥२३॥ धर्माधर्मौ कार्यहेतू तथा भूतभविष्यती ॥ अन्यच्च सर्वं नो यत्र तदेवापेक्षितं मम ॥२४॥ सर्ववेदेषु यद्वेद्यं तपांसि यदवाप्तये ॥ ब्रह्मचर्यं च तद्वस्तु प्रणवेनाभिधीयते ॥२५॥ प्रणवो वाचकस्तस्य स्यात्प्रतीकमुपास्तये ॥ तेन बोद्धुर्भवेन्मुक्तिर्ब्रह्मलोकोऽप्युपासितुः ॥२६॥ न जायते न म्रियते प्रणवार्थश्चिदात्मकः ॥ पुराणोऽसावजत्वेन नित्यः स्यादमृतत्वतः ॥२७॥ कारणं नास्य कार्यं वा देहघातेऽपि नो हतिः ॥ देहो देहांतरं हंति न चिद्धंति न हन्यते ॥२८॥ श्यामाकादेरणोरेषोऽणीयांस्तत्राणुकल्पनात् ॥ महीयान्महतः खादेस्तत्राकाशादिकल्पनात् ॥२९॥ स्थितो जंतोर्हृद्गुहायां तं निष्कामस्तु पश्यति ॥ इंद्रियाणां प्रसन्नत्वाद्वीतशोकस्तदा भवेत् ॥३०॥ अंतर्मुखोऽहं पश्यामि मत्तोऽन्यो बाह्यधीः पुमान् ॥ ज्ञातुमर्हति को वा तं विरुद्धात्मत्वभासिनम्[1] ॥३१॥ दूरं गच्छेदिहासीनः शयानो याति सर्वतः ॥ समदो विमदश्चाऽतो दुर्लक्ष्यो ह्यविवेकिभिः ॥३२॥ वने ध्यातुं समासीनो देहं संकल्प्य मानसम् ॥ तेनैव नगरं गत्वा करोति क्रयविक्रयौ ॥३३॥ शयानो मंचकेऽक्षेषु विलीनेषु निराकृतिः ॥ आकाशवत्सर्वगत एकः सुप्तोऽवतिष्ठते ॥३४॥ धनविद्यादिभिर्मत्तः पांडित्यं सदसि ब्रुवन् ॥ वैराग्यनटनेनासौ लक्ष्यते

---

१ आत्मानं अन्यथा भासयन् ।

मदहीनवत् ॥३५॥ एवं विरुद्धधर्मत्वात् स भावः कोऽस्य वास्तवः॥ इति ज्ञातुमशक्यत्वादंतर्दृश्यैवमीक्षताम् ॥३६॥ अशरीरं शरीरेष्वनवस्थेष्वेष्ववस्थितम् ॥ सर्वगं बहुभावाधिष्ठानं मत्वा न शोचति ॥३७॥ नायमात्मा बहोः पाठाद्बहुश्रुत्या च मेधया ॥ लभ्यो बहिर्मुखस्यास्य नेश्वरानुग्रहो यतः ॥३८॥ यमंतर्मुखमीशोऽनुगृह्णीते तेन लभ्यते ॥ तस्येशः स्वात्मनो रूपं भासयत्यखिलं स्फुटम् ॥३९॥ पापं क्रोधमनैकाग्र्यं योगसिद्धिं च नैति यः ॥ तमीश्वरोऽनुगृह्णाति स ज्ञानेनैनमाप्नुयात् ॥४०॥ ब्राह्मणादिजगन्मृत्युसहितं यस्तु संहरेत् ॥ सोऽयमुग्रः कथं बोद्धुं शक्यः स्यान्नियतिं विना ॥४१॥ को बोद्धा कश्च बोद्धव्य इति चेत्तावुभौ शृणु ॥ बुद्धिप्रविष्टौ जीवेशौ बोद्धृबोद्धव्यतां गतौ ॥४२॥ अवच्छिन्नो भवेज्जीवोऽनवच्छिन्नो महेश्वरः ॥ रथस्वामी च गंतव्यदेशो यद्वदुभौ यथा ॥४३॥ जीवं तं रथिनं विद्धि शरीरं रथमेव तु ॥ जीवोपाधिमहंकारं सारथिं प्रग्रहं मनः ॥४४॥ इंद्रियाणि हया ज्ञेया विषया गम्यभूमयः ॥ सारथ्यधीनाः सर्वत्र रथिनः सदसद्गतिः ॥४५॥ कर्ता सारथिरक्षाणि नियम्य मनसा क्रमात् ॥ गच्छन्नंतर्मुखो मार्गपारं विष्णुपदं व्रजेत् ॥४६॥ इंद्रियादिर्विष्णुतत्त्वपर्यंतो ह्यंतरक्रमः॥ इंद्रियेभ्यो भौतिकेभ्यो भूतेष्वांतरता स्थिता ॥४७॥ तद्भूतेभ्यः सूक्ष्मभूतकार्यत्वान्मन आंतरम्॥ ततोऽतिसूक्ष्मकार्यत्वात्कर्तृत्वोपाधिरांतरः ॥४८॥ समष्टिकर्तृतोपाधिरांतरो व्यष्टिकर्तृतः ॥ समष्ट्याख्यमहत्तत्वात्तद्धेत्वव्यक्तमांतरम् ॥४९॥ मायाख्याव्यक्ततोऽप्यस्याधारः पुरुष आंतरः ॥ पुरुषान्नापरं किंचित्सर्वं तेनैव पूरितम् ॥५०॥ सद्रूपः पुरुषस्तस्य सत्वे-

---

१ आत्मानम् ।

नान्यत्र पूरणात् ॥ अस्तीति[1] निखिलं भाति पूरकः पुरुषो मतः ॥५१॥ वस्तुतत्त्वविचारोंतः पुरुषेऽस्मिन्समाप्यते ॥ गंतव्यतत्त्वसीमत्वाद्रथी गच्छति तं क्रमात् ॥५२॥ रथिनो वास्तवं रूपं पूर्णत्वं तदबोधतः ॥ अवच्छिन्नत्वमेतच्च तद्बोधेन निवर्तते ॥५३॥ आत्मा सर्वेषु देहेषु भ्रांत्या गूढो न भासते ॥ एकाग्रया सूक्ष्मयैतं पश्येत्ताच्छील्यवान् धिया ॥५४॥ धियस्तथात्वं योगात्स्याद्योगो भूमिचतुष्कवान् ॥ वाग्धीकर्तृसमष्टीनां निरोधाद्भूमयोऽभवन् ॥५५॥ वागादिकं बाह्यमक्षं निरुंधन् शेषयेन्मनः ॥ मनो निरुधन्कर्तारं शेषयेद्व्यष्टिरूपिणम् ॥५६॥ सविकल्पकमेतच्च निरुंधन्निर्विकल्पकम् ॥ अस्मीत्येतन्मातृरूपं महांतमवशेषयेत् ॥५७॥ तमप्यंते निरुंध्याथ शांतात्मा शिष्यते स्वयम् ॥ क्षुरधारेव विषमो योगो मंदमतेरयम् ॥५८॥ क्षुरोऽतिलग्नो देहघ्नो न लग्नश्चेद्वपेत नो ॥ समाहितं मनोप्येवं निद्रां कुर्याद्बहिर्व्रजेत् ॥५९॥ कौशलं योगिनोऽपेक्ष्यं नापितस्य यथा क्षुरे ॥ निवार्य लयविक्षेपौ समादध्यात्[2]परात्मनि ॥६०॥ शब्दस्पर्शादिहीनात्मा सौक्ष्म्यात्सौक्ष्म्यधियेक्ष्यते ॥ खं वाय्वग्निजलोर्वीणां स्थौल्यं शब्दादिमत्त्वतः ॥६१॥ शब्दस्पर्शौ रूपरसौ गंधो भूतगुणा इमे ॥ एकद्वित्रिचतुःपंचगुणा व्योमादयः क्रमात् ॥६२॥ गुणाधिक्ये स्थौल्यवृद्धिः सौक्ष्म्यवृद्धिर्गुणक्षयात् ॥निर्गुणं चातिसूक्ष्मत्वादतिसूक्ष्मधियेक्षते ॥६३॥ विद्यायोगौ यमेनोक्तौ वैराग्यं नचिकेतसा ॥ स्वत एवास्त्युपाख्यानं नाचिकेतमिदं शुभम् ॥६४॥ एतदेवातिविस्पष्टं पुनश्चात्र प्रपंच्यते ॥ श्रूयतां नचिकेतोऽत्र विद्यायाः प्रतिबंधकम् ॥६५॥ इंद्रियाणि बहिर्द्रष्टुं ससृजे परमेश्वरः ॥ अतस्तैः प्रत्यगा-

---

१ अस्तीति रूपेण निखिलं विश्वं दृश्यते । २ समाधिं कुर्यात् ।

त्मानं न कश्चिदपि वीक्षते ॥६६॥ सकामं च मनस्तद्वन्निष्कामं चात्मशु-द्धये ॥ सृष्टं तयोर्योगयुक्तमनसात्माऽवलोक्यते ॥६७॥ यच्चैतन्यानु-ग्रहेण रूपादीनिंद्रियैः पुमान्॥जानाति येन स्वप्नादि दृश्यते तद्विविच्य-ताम् ॥६८॥ चैतन्येन जडं ज्ञेयमित्युक्ते शिष्यतेऽत्र किम्॥ अज्ञानं[1] निखिलं प्रज्ञं चैतन्यं ब्रह्म वस्तु हि ॥६९॥ यद्वेदैरपि संदिग्धं यत्पृष्टं नचिकेतसा ॥ धर्माधर्माद्यतीतं यत्तदिदं ब्रह्म वर्णितम् ॥७०॥यः कर्मफलभोक्ताऽस्ति जीवः प्राणादिधारकः ॥ उपाधितो विविच्यैतं ज्ञात्वेशं न जुगुप्सते ॥७१॥ जुगुप्सा योनिसंप्राप्तिर्नाऽसावेतस्य विद्यते॥जगत्कर्तृतया लक्ष्य ईशोऽयं तस्य[2] का जनिः ॥७२॥यद्देहेऽस्ति तदेवैषु वेदेषु ब्रह्म गीयते ॥ मृत्योः स मृत्युमाप्नोति योऽत्र नानेव पश्यति ॥७३॥ मनसैवेदमाप्तव्यमेकाग्रेणेशजीवयोः ॥ तत्त्वमद्वैत-मेतस्मिन्योगी भेदं न पश्यति ॥७४॥ हृन्निष्ठो बुद्ध्यवच्छिन्नो जीवो ह्यंगुष्ठमात्रकः ॥ उपाध्यपगमे सोऽयमीशानो भूतभव्ययोः ॥७५॥ वृष्टं जलं पर्वताग्रे बहुधाऽधोगतिं व्रजेत् ॥ जीवेशभेददृक् चैवं बहु-योनिषु जायते ॥७६॥ वृष्टं तु निर्मले कूपे सुस्थितं पीयतेऽमृतम्॥ तथैव ब्रह्मतां स्वस्य विजानन्मुच्यते सुधीः ॥७७॥ पुरमेकादशद्वारं नाभिमूर्धन्यसंयुतम् ॥ देहाख्यं यस्य तं दृष्ट्वा विमुक्तः सन्विमुच्यते ॥७८॥ जीवन्नविद्याकामादिबंधैर्मुक्तो मृतः पुनः ॥ शरीरग्रहणाभा-वाद्विदेहः सन्विमुच्यते ॥७९॥ प्राणमूर्ध्वं नयत्यात्माऽपानवायुं नय-त्यधः ॥ तत्सेवकाश्चक्षुराद्या लिंगेनात्माऽनुमीयताम् ॥८०॥ सक-र्तृकाः प्राणचक्षुराद्याः स्युः साधनत्वतः ॥ कुठारवत्ततो नायमस्ती-त्येतन्निराकृतम् ॥८१॥ प्राणापानवशादेहो जीवतीति यदुच्यते ॥

---

१ अज्ञानं निखिलम् । २ तस्येशस्य का जनिर्न कापीत्यर्थः ।

तत्र प्राणाद्याश्रयो यः कर्ता तेनैव जीवति ॥८२॥ स कर्ताऽस्मि-
न्मृते देहे स्वकर्मवशतः पुनः ॥ विप्रादियोनिमाप्नोति लतावृक्षादि-
नामुत ॥८३॥ देहौ नीचोत्तमौ तादृक्कर्मकर्तृपुरःसरौ ॥ नीचोत्तम-
त्वात्प्रासादपर्णशाले यथा तथा ॥८४॥ सुप्तेष्वक्षेषु यः स्वप्ने कामं
कामं सृजत्ययम् ॥ देहातिरिक्तस्तं को वा निराकर्तुं प्रभुर्भवेत् ॥८५॥
जीवात्मानं प्रसाध्यैवं तस्यैवोपाध्युपायतः ॥ ब्रह्मतां वेत्ति जगत
आधारत्वेन लक्षिताम् ॥८६॥ अग्निर्यथैकः काष्ठेषु प्रविश्य बहुधा
भवेत् ॥ तथात्मा त्वेक एवैषु देहेषु बहुधोच्यते ॥८७॥ वायुश्चै-
कोऽपि देहेषु प्रविश्य प्राणरूपतः ॥ बहुधा भात्येवमात्मा प्रत्युपाधि
पृथग्भवेत् ॥ ८८ ॥ सर्वचक्षुःस्थरूपोऽपि न रविर्नेत्ररोगभाक् ॥
सर्वात्मत्वेऽपि तद्ब्रह्म तथा दुःखैर्न लिप्यते ॥८९॥ सर्वभूतांतरा-
त्मैकः स्वतंत्रो मायया वृतः ॥ एकं स्वं बहुधा कुर्याद्बहुरूपो यथा
नटः ॥९०॥ मायोपाधिक ईशोऽयं बुद्ध्युपाधिमतां नृणाम् ॥ कर्मा-
नुसारिणः कामान्विदधात्युपभुक्तये ॥९१॥ स्वचित्तस्थं साक्षिरूप-
मीशं पश्यंति ये नराः ॥ तेषां नित्या दुःखशांतिर्ब्रह्मानंदश्च शाश्वतः
॥९२॥ अनिर्देश्यं तमानंदं प्रत्यक्षं मन्वते बुधाः ॥ सदृशो वा स्वप्र-
काश इति चेन्न स दृश्यते ॥९३॥ न भासयंति सूर्याद्या बुद्ध्या-
द्याश्च स्वयंप्रभम् ॥ किं तु भांतं तमन्वेते भांति भासा तदीयया
॥९४॥ सर्वोत्तमत्वादूर्ध्वं तन्मूलं संसारशाखिनः ॥ देवमानुषप-
श्वाद्याः शाखास्तस्याधमा मताः ॥९५॥ यन्मूलं तत्स्वयंज्योतिस्त-
देवामृतमुच्यते ॥ तस्मिन् लोकाः श्रिताः सर्वे तच्च नात्येति कश्चन
॥९६॥ मायाशक्तियुजा तेन जगत्सर्वं नियम्यते ॥ अग्निसूर्यादयस्त-
स्माद्भीताः संतश्चरंति हि ॥९७॥ नरदेहस्य पातात्प्राक् तद्बोद्धुं शक्नु-

यान्न चेत् ॥ जन्मांतरेषु तद्बोधः प्रायेणात्यंतदुर्लभः ॥९८॥ स्वप्नवत्पितृलोकस्य स्वातंत्र्यं नास्ति किंचन ॥ गंधर्वलोके भोगेच्छावशाद्धीरतिचंचला ॥९९॥ ब्रह्मलोकेऽस्त्येष बोधः स लोकः सुलभो न हि ॥ आदर्शवच्छुद्धचित्ते नरेणात्मेक्ष्यते स्फुटम् ॥ १०० ॥ इंद्रियाणामनात्मत्वमागमापायदर्शनात् ॥ बुध्वा तत्साक्षिणि स्वस्मिन् ब्रह्मत्वं बुध्यते सुखात् ॥१॥ मंदश्चेदक्षधीकर्तृसमष्ट्यव्यक्तरूपतः ॥ क्रमाद्विविच्य मूढः स्वं वीक्ष्यते सूक्ष्मया धिया ॥२॥ बाह्याक्षविषयेष्वात्मस्वरूपं न हि तिष्ठति ॥ निवृत्ताक्षो[1] निरुद्धेन सूक्ष्मेण मनसेक्षते ॥३॥ अप्रमत्तोऽखिलाऽक्षाणि सकर्तृणि यदा पुमान् ॥ निरुणद्धि तदा योगं तामवस्थां प्रचक्षते ॥ ४ ॥ सर्वाक्षाऽगोचरत्वेऽपि स्वात्माऽस्तीत्याह तत्त्ववित् ॥ कारणस्यात्मनोऽसत्वे शून्यं कार्यं जगद्भवेत् ॥५॥ अस्तीत्येवोपलब्धव्यो[2] नाऽयमस्तीति न त्वया ॥ सर्वत्रानुगतं यत्तत्तन्नास्तीत्युच्यते कथम् ॥६॥ सोपाधिकं तावदादौ दृष्ट्वाऽस्तीति ततः पुनः ॥ उपाधीन्संपरित्यज्य तत्त्वभावेन पश्यति ॥७॥ उपाधीनां माययैषां कल्पितत्वेन तैर्विना ॥ निरुपाधिकसन्मात्रं वस्तु तच्च तथेक्ष्यताम् ॥८॥ कलुषं जलमानीय ततोऽस्मिन्कातकं रजः ॥ यदा क्षिपेत्तदा नीरं प्रसीदति[3] यथा तथा ॥ ९ ॥ सोपाधिकज्ञानवतो निरुपाधिः[4] प्रसीदति ॥ रजःप्रक्षेपसदृशी योगान्निष्कामता धियः ॥११०॥ यदा सर्वे प्रमुच्यंते कामा येऽस्य हृदि स्थिताः ॥ तदैव मर्त्यतां हित्वा स जीवन्ब्रह्मतां[5] व्रजेत् ॥११॥ अहंकारेण चैतन्यं ग्रथित्वेच्छति चेत्तदा ॥ हृदये ग्रंथयः[6] कामास्ते भिद्यंते

१ विषयेभ्यः प्रत्याहृतचक्षुरिंद्रियः । २ साक्षात्कर्तव्यः । ३ निर्मलं भवति । ४ निराकारं ज्ञानं भवतीत्यर्थः । ५ जीवन्मुक्तताम् । ६ भवंतीति शेषः ।

विवेकिनः ॥१२॥ अहंकारचितोरैक्यभ्रांतेरपगमे सति ॥ कामा-
भासाः संतु चित्ते क्रमान्नश्यंति तेऽपि च ॥ १३ ॥ जीवन्मुक्तस्तु
निष्कामो न मृतिं प्रतिपद्यते ॥ प्राणोत्क्रांतिर्मृतिः सा तु ज्ञानिनो न
हि विद्यते ॥१४॥ प्राणा अंतर्विलीयंते तप्ताश्मक्षिप्तनीरवत् ॥ ज्ञानी
पुराऽपि ब्रह्मैव सन्ब्रह्माऽप्येति तल्लये ॥१५॥ ब्रह्म बोद्धुमशक्तः सन्नु-
पास्ते चेत्तदा पुमान् ॥ नाड्या मूर्धन्यया ब्रह्मलोकं गत्वा विमुच्यते
॥१६॥ अत्रैवोपासकस्यास्य धीशुद्धिश्चेत्तदा त्वसौ ॥ देहाद्विविच्य
हृन्निष्ठं ब्रह्मत्वेनावगच्छति ॥१७॥ मृत्युप्रोक्तां नाचिकेतो विद्यां
योगं तथाऽखिलम् ॥ लब्ध्वा ब्रह्माप्तवानेवं लब्ध्वाऽन्योऽपि विमु-
च्यते ॥१८॥ विद्या तत्फलयोर्विघ्नशांत्यर्थं सहनाविति ॥ मंत्रं जपे-
त्तेन विघ्नाः शाम्यंत्येव न संशयः ॥१९॥ वैराग्यं नाचिकेतस्य यथा
तीव्रं तथा पुमान् ॥ प्राप्नोति सेव्यमानः सन्विद्यातीर्थमहेश्वरम्
॥१२०॥ इति श्रीविद्यारण्यविरचिते अनुभूतिप्रकाशे कठवल्लीविव-
रणो नाम एकादशोऽध्यायः ॥११॥

श्वेताश्वतरनामा यो यजुःशाखाप्रवर्तकः ॥ सोऽत्याश्रमिभ्यः
प्रोवाच विद्यां व्याचक्ष्महेऽत्र ताम् ॥१॥ ये वेदवादिनस्ते तु मीमां-
संते मुमुक्षवः ॥ जगतः कारणं ब्रह्मेत्येवं वेदेषु घुष्यते ॥२॥ उत्प-
त्तिस्थितिनाशाः स्युर्यतस्तत्कारणं त्विति ॥ सामान्यमेव विज्ञातं
विशेषस्तु न बुध्यते॥३॥ कस्माद्वस्तुविशेषान्नो जन्म केन च जीव-
नम् ॥ लयः कस्मिन्व्यवहृतौ सुखादौ को नियच्छति ॥४॥ पितृ-
भ्यामन्नतो रेतादपि जन्मादयस्त्रयः ॥ नियामकश्च राजेति वचनं
बालभाषितम् ॥५॥ पितृराजाद्यशेषस्य जगतश्चिंत्यतेऽधुना ॥ कारणं
तच्च शास्त्रैकगम्यं शास्त्रं तु नैकधा ॥६॥ कालः[1] स्वभावो[2] नियति[3]-

यदृच्छा भूतपंचकम् ॥ प्रधानं जीवं एतानि मतान्युक्तानि शास्त्रिभिः ॥७॥ ऋतुकाले भवेद्गर्भो वर्षतौ सस्यसंभवः ॥ उदाह्रियत इत्यादि बहुधा कालवादिना ॥८॥ स्वभाववाद्यग्निमुष्णं जलं द्रवमुदाहरत् ॥ रूपज्ञानं चक्षुषैवेत्याहुर्नियतिवादिनः ॥९॥ धनिकत्वादिव्यवस्था यदृच्छावादिनोच्यते ॥ भूतवादी देहगतकाठिन्यादीनुदाहरत् ॥ १० ॥ प्रधानवादी पुरुषान्सात्विकादीनुदाहरत् ॥ जीववादी कर्मवशाज्जन्म देवाद्युदाहरत् ॥११॥ सर्वत्र युक्तेर्दृष्टत्वात्किं तत्त्वमिति चिंत्यते ॥ सर्वेषामनिवार्यत्वात्तत्संघोऽस्त्विति चेन्न तत् ॥१२॥ स्वतंत्रे चेतने जीवे सति कालाद्यचेतनाः॥समप्रधानभावेन कथं संघीभवंति ते॥१३॥तर्हि जीवो हेतुरस्तु तन्न दुःखादिदर्शनात्॥स्वतंत्रः स्वात्मनो दुःखं कुर्वन्दृष्टो न हि कश्चित् ॥१४॥ दोषान्सर्वेषु पक्षेषु पश्यंतो बहुधा तदा ॥ मायाशक्तिमनिर्वाच्यामपश्यन्ध्यानयोगतः ॥१५॥ द्वित्रिकक्षासु युक्तीनां सत्त्वेऽप्यंते न संति ताः ॥ न जानामीत्येवमंते विषीदंति हि वादिनः ॥१६॥ यदंते शरणं सर्ववादिनामविवादतः ॥ तदज्ञानमनिर्वाच्यं मायेत्याहुर्विपश्चितः ॥१६॥ अनिर्वाच्येऽपि युक्तिं चेदन्विच्छति स मूढधीः ॥ न रूपं चक्षुषा द्रष्टुमिच्छत्येवातिमोहितः ॥१८॥ सर्वकार्येषु शक्तत्वान्मायाऽऽक्षेपं न साऽर्हति ॥ दुर्घटस्यैव घटने स्वभावः सर्वसंमतः ॥१९॥ तथाविधायां मायायां परात्मा प्रतिबिंबितः ॥ अवांतराणि वस्तूनि कालादीन्यधितिष्ठति ॥२०॥ मायाविशिष्टमीशानं जगदाकारतां गतम् ॥ संसारचक्रमित्याहुः संसाराख्यनदीति च ॥ २१ ॥ पुनः पुनर्जायमानश्चक्रवत्परिवर्तते ॥ अविच्छेदेन संसारो नदीवत्प्रवहेत्सदा ॥ २२ ॥ जीवोऽहंकारोपहितश्चक्रवद्भ्राम्यते सदा ॥ मायोपहित ईशनो जन्मसु

प्रेरयेदमुम् ॥२३॥ उपाधिद्वयहीनं तु ब्रह्म वेदेषु बोध्यते ॥ इत्थं वेदरहस्यज्ञा भवेयुर्ब्रह्मतत्पराः ॥२४॥ जगत्स्याव्यक्तमव्यक्तं सृष्टि-संहारयोः क्रमात् ॥ बिभर्ति द्वयमीशानश्चिदात्मा तु विमुक्तिभाक् ॥२५॥ ईशानीशावज्ञतज्ज्ञौ भोक्ता भोजयिता च तौ ॥ तयोर्निर्वाहिका माया ब्रह्मण्यारोपितं त्रयम् ॥२६॥ जगद्भ्रमं जीवभेदं वासना देहधारणम् ॥ चतुष्टयं निराकुर्यादभिधानादिभिः क्रमात् ॥ २७ ॥ अभितो ब्रह्मरूपत्वध्यानाद्याति जगद्भ्रमः ॥ ब्रह्मत्वे योजिते स्वस्य जीवभावोऽपि गच्छति ॥२८॥ अद्वये भाविते तत्त्वे वासना विनिवर्तते ॥ आरब्धांते देहहानिर्मायैवं क्षीयतेऽखिला ॥२९॥ ब्रह्मज्ञानात्पाशहानौ क्षीणक्लेशो न जन्मभाक् ॥ पाशाश्चतुर्विधाश्चैव शास्त्रेषु प्रतिपादिताः ॥३०॥ मलो माया कर्म तत्त्वतिरोधानं च ते मताः ॥ मलो ज्ञानक्रियाशक्त्योश्छादको दोष इष्यते ॥३१॥ रागादिहेतुर्मायोक्ता कर्म पुण्यं च पातकम् ॥ मूढैस्तत्त्वतिरोधानं सर्वैरप्यनुभूयते ॥३२॥ क्लेशान्पतंजलिः प्राह तेष्वविद्यादिरस्मिता ॥ द्वितीया द्वेषरागौ चाभिनिवेशस्तु पंचमः ॥३३॥ भोक्ता भोग्यं प्रेरकश्च त्रयं ब्रह्मेति तत्त्वधीः ॥ उपायेन ब्रह्मधीः स्यादरणिस्थाग्निलाभवत् ॥३४॥ उपायः प्रणवेनात्मध्यानं तेनैष लभ्यते॥ तिलात्तैलादयो यद्वल्लभ्यास्तत्तदुपायतः॥३५॥सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितम् ॥ आत्मविद्यातपोभ्यां तमुपलभ्य विमुच्यते ॥३६॥ यदुक्तं प्रणवध्यानं स योगस्तत्र यत्नवान् ॥ मनो ब्रह्मणि युंजानस्तत्साक्षात्कुरुते धिया ॥३७॥ उरोंसमूर्धस्थानेषु त्रिषु देहं समुन्नतम् ॥ अवस्थाप्यासनं जित्वा प्रत्याहारं समाचरेत् ॥३८॥ हृद्यक्षाणां निरोधो यः प्रत्याहारः स उच्यते ॥ जयेत्प्राबल्यमक्षाणां प्राणायामेन धैर्यवान् ॥ ३९ ॥ प्राणाधीनव्यापृतीनामक्षाणां प्राणरो-

धनात् ॥ निरोधः स्यात्ततश्चित्तं धारयेताप्रमादतः ॥४०॥ समे शुचौ शर्करादिमशकादिविवर्जिते ॥ मनोऽनुकूलेऽवस्थाय देशे ध्यानं समाचरेत् ॥४१॥ नाडीरूपाणि नीहारधूमान्यत्र विभांति चेत् ॥ ब्रह्मसन्निधिमाप्ता धीरिति निश्चीयतां तदा ॥४२॥ निर्जरत्ववितृष्णत्वशुभगंधादि चेद्भवेत् ॥ योगसिद्धिः प्रवृत्तेति ज्ञात्वा योगे स्थिरो भवेत् ॥४३॥ मेघच्छन्नं चंद्रबिंबं मेघापायेऽतिनिर्मलम् ॥ तथैव बुद्धिचांचल्यशांतावात्मा प्रसीदति ॥४४॥ स्वात्मतत्त्वप्रसादेन ब्रह्मतत्त्वं प्रसीदति ॥ शास्त्राद्बुद्धं ब्रह्मतत्त्वमात्मत्वेनानुभूयताम् ॥४५॥ अजं ध्रुवं मायिकैस्तैः कार्यैः सर्वैर्विवर्जितम् ॥ ज्ञात्वा देवं परात्मानं सर्वपापैर्विमुच्यते ॥४६॥ एष देवः सर्वदिक्षु वह्न्यादिष्वखिलेषु च ॥ वर्तते तं विचिंत्याथ प्रणमेत्सर्वदैव तम् ॥४७॥ तत्त्वयोगौ समुद्दिष्टावुत्तमस्याधिकारिणः ॥ अथ सोपाधिकं वस्तु मंदं प्रत्यभिधीयते ॥४८॥ ऐंद्रजालिकवन्मायाजालवानेक ईश्वरः ॥ नियच्छन् शक्तिभिर्लोकान्सृजते संहरत्यपि ॥४९॥ एक एवेश्वरस्तादृक् द्वितीयो नैव विद्यते ॥ जनानां प्रत्यगात्माऽसौ जगत्सृष्ट्यादिकार्यपि ॥५०॥ स विराड्रूपतां प्राप्य विश्वतश्चक्षुरादिमान् ॥ सर्वेषां चक्षुराद्या ये तदीया एव तेऽखिलाः ॥५१॥ यो देवानामिति प्रोक्तैस्त्रिभिर्मंत्रैस्तमीश्वरम् ॥ मुमुक्षुः प्रार्थयेतैव सदा बुद्धिविशुद्धये ॥५२॥ ततः शुद्धमतिर्ब्रह्म सर्वभूतेष्ववस्थितम् ॥ अंतर्बहिश्च संव्याप्तं ज्ञात्वा स्यान्मृतिवर्जितः ॥५३॥ श्वेताश्वतरनामाऽहं पुरुषं वेद्मि तं प्रभुम् ॥ अन्योऽपि तं विदित्वैव मृत्युमत्येति नान्यथा ॥५४॥ यस्मात्परं नापरं वा किंचिदस्ति तदद्वयम् ॥ वृक्षवन्निश्चलं तेन पूर्णं सर्वमिदं जगत् ॥५५॥ एतद्विदुर्मृत्युहीनास्ते स्युर्ये तु न तद्विदुः ॥ ते दुःखमेव गच्छंति न तत्सो-

पाधिकेक्षणे ॥५६॥ दुर्लक्ष्यो निरुपाध्यात्मा सूक्ष्मधीवर्जितैर्नरैः ॥ सुलक्ष्य एव सोपाधिस्तस्मादेवं स्मरेदमुम् ॥५७॥ सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः ॥ वशी सर्वस्य लोकस्य स्थावरस्य चरस्य च ॥ ५८ ॥ विश्वाकारजनेः प्राक्च सर्वव्यवहृतिक्षमः ॥ अपाणिपादो जवनो ग्रहीता सर्वशक्तियुक् ॥ ५९ ॥ अणोरणीयान्दुर्लक्ष्यो महीयान्महतः स्फुटः ॥ इत्यात्मानं शास्त्रदृष्ट्या पश्यतो नास्ति दुःखिता ॥६०॥ स्थूलदर्शी तु साकारे सार्वात्म्ये वासिते सति ॥ निराकारं ततो बोद्धुं प्रार्थयेतैश्वरं वपुः ॥६१॥ य एको वर्ण इत्यादि स्तुवन्मंत्रचतुष्टयात् ॥ प्रार्थ्याथ मायाजीवौ च बुद्धसुप्तौ विचारयेत् ॥६२॥ लोके काचिदजा वर्णत्रयोपेता बहुप्रजाः ॥ सृजते तामजः कश्चित्सेवतेऽन्यस्तु तां त्यजेत् ॥६३॥ तेजोऽबन्नात्मिका तद्वन्माया वर्णैस्त्रिभिर्युता ॥ आसक्तो भजते मायां विरक्तस्तु विमुंचति ॥६४॥ विरक्तः कर्त्रकर्तारौ विचिंत्यात्स्वस्य विग्रहे ॥ चिच्छायावानहंकारः कर्ता चिद्भाति केवला ॥६५॥ पादपे क्षुधितः पक्षी फलमत्तीतरः पुनः ॥ पश्यन्नास्ते तथा विद्याद्भोक्तृतत्साक्षिणावुभौ ॥६६॥ चिच्छायागतभोक्तृत्वं साक्षिण्यारोप्यते भ्रमात् ॥ अनीश्वरोऽयं साक्षीति शोको भवति मोहतः ॥ ६७ ॥ नित्यतृप्तेश्वरत्वं तत्साक्षितत्त्वं तदीक्षते ॥ यदा तदा वीतशोको महिमानमवाप्नुयात् ॥६८॥ ऋचो देवाश्च शब्दार्था यस्मिन्नात्मनि कल्पिताः ॥ यस्तं न वेद तस्यर्चा किं स्याद्यो वेत्त्यसौ कृती॥६९॥ छंदांसि यज्ञा नान्यच्च मायावी सृजतेऽखिलम् ॥ जीवात्मना प्रविश्यास्ते सन्निरुद्धो वपुष्ययम् ॥७०॥ मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ॥ तस्यावयवभूतैस्तु

१ तृतीयोऽध्यायः ।

व्याप्तं सर्वमिदं जगत् ॥७१॥ ईशो यः स्वत एकः सन् जीवाकारैरनेकशः ॥ योनिं योनिं व्रजत्येतमीशं ज्ञात्वा न संसरेत् ॥७२॥ प्रतिबंधस्य बाहुल्याद्यो देवेत्यादिमंत्रतः ॥ पुनः पुनर्भजेतेशं प्रतिबंधनिवृत्तये ॥७३॥ अदृष्टप्रतिबंधो यो निवर्त्य भजनेन तम् ॥ दृष्टो यः प्रतिबंधस्तं विचारेण जयेत्पुनः ॥७४॥ सूक्ष्मेभ्यः परमाणुभ्योऽप्यतिसूक्ष्मो न लक्ष्यते ॥ बहिर्मुखैः स्वतः सोऽयं विश्वं व्याप्याऽवतिष्ठते ॥७५॥ जगतः पालनेनायमस्तीत्यादौ विबुध्यताम् ॥ ब्रह्मर्षयो देवताश्च योगेनैतं विजानते ॥७६॥ क्षीरे घृतनिमित्तं यत्सारं तद्धीमतेक्ष्यते ॥ तथा वृत्तिनिरोधिन्या सूक्ष्मं वस्तु धियेक्ष्यताम् ॥७७॥ दिवारात्रिस्तमश्चान्यद्यस्मिन्नास्ति न किंचन ॥ नोर्ध्वं न तिर्यक्तद्वस्तु न दृष्टांतोऽस्य विद्यते ॥७८॥ दृग्गोचरे तस्य रूपं नास्त्यतः कोऽपि नेक्षते ॥ अजात इति मंत्राभ्याममंतर्दृष्ट्या भजेत तम्[१] ॥७९॥ पुनश्चैवं विवेक्तव्यं विद्याविद्ये निजात्मगे ॥ अविद्यया बध्यतेऽसौ विद्यया तु विमुच्यते॥८०॥अविद्याकल्पितोपाधिभेदादीशत्वजीवते ॥ चैतन्यस्य भवेतां ये कथ्येते ते क्रमादिह॥८१॥ हिरण्यगर्भमुत्पन्नमादौ ज्ञानैर्बिभर्ति यः॥ एकैकमंतःकरणं बहुधा विकरोत्ययम्॥८२॥अधश्चोर्ध्वं दिशः सर्वा भ्राजतेऽसौ प्रकाशयन् ॥ भारं वहेद्यथाऽनड्वान्जगद्भारं वहेत्तथा॥८३॥ यो भावान् क्षीरबीजादीन्दधिवृक्षादिरूपतः ॥ परिणामं नयेत्सोऽयं गुणांस्त्रीन्विनियोजयेत् ॥८४॥ अविद्याकृतमीशत्वं तदिदं स्पष्टमीरितम् ॥ वेदगुह्योपनिषदा तस्य तत्त्वमुदीरितम्॥८५॥ अविद्याकृतजीवत्वमथ स्पष्टमुदीर्यते॥ सत्वं रजस्तमश्चेति गुणैर्जीवः समन्वितः ॥८६॥ स फलार्थं कर्म कुर्याद्भुंक्ते तस्यैव तत्फलम् ॥

---

१ चतुर्थोऽध्यायः ।

दक्षिणोदगधोमार्गैः संसरत्येष कर्मभिः ॥८७॥ अंगुष्ठमात्रहृन्निष्ठः स्वप्रकाशः स सूर्यवत् ॥ अहंकारोपाधिकः सन् संकल्पान्कुरुते बहून् ॥८८॥ बुद्धिवृत्त्यात्मचैतन्यसंयोगादेष चेतनः ॥ स संकोच-विकाशाभ्यां तैस्तैर्देहैः समो भवेत् ॥८९॥ नैव स्त्री न पुमानेष नैव चायं नपुंसकः ॥ यद्यच्छरीरमादत्ते तेन तेन स कथ्यते ॥९०॥ अविद्याधीनजीवेशावुक्तौ यत्तत्त्वमेतयोः ॥ तद्विद्यासिद्धये कालस्व-भावादीन्विचा[1]रयेत् ॥९१॥ मूलकारणतैतेषां न युक्ता जनिम-त्त्वतः ॥ देवस्य महिमा योऽसौ मायाख्यस्तस्य युज्यते ॥९२॥ तन्महिम्नावृतं सर्वं कालं च कलयत्यसौ ॥ भूतभव्यादिरूपेण भिन्नोऽसौ जायते ततः ॥९३॥ जलाग्न्यादिसमुत्पत्तौ स्वभावः सह जायते ॥ यदृच्छा पंचभूतानि प्रधानं चेति मायि[2]कम् ॥९४॥ मूलकारण-ताऽस्त्येव मायाया जन्यभा[3]वतः ॥ अवांतरं कारणत्वं कालादीनां भवत्विदम् ॥९५॥ एकं प्रधानं द्वे पुण्यपापे सत्वादिकास्त्रयः ॥ अष्टौ प्रकृतयो भूमिमुख्यास्तैर्जायते वपुः ॥९६॥ यो मायावी स सर्वेषामादिः कालत्रयात्परः ॥ विश्वरूपं स्वचित्तस्थं तमुपास्य प्रसाद-येत् ॥९७॥ संसारवृक्षात्कालादिशाखायुक्तात्परो ह्ययम् ॥ धर्मा-वहं पापनुदं स्वचित्तस्थं तमीक्ष्यताम् ॥९८॥ विष्णवादीनामीश्वराणां परमं तं महेश्वरम् ॥ देवानां परमं देवं विदामोऽस्य प्रसादतः ॥९९॥ न तस्य वपुरक्षं च विद्यते तत्समोऽपि न ॥ परास्य शक्ति-र्विविधा बलज्ञानक्रियादिका ॥१००॥ सोऽधिष्ठानतया सर्वकारणं कारणाधिपः ॥ ये जीवा अधिपस्तेषां नान्योऽस्याधिपतिर्भवेत् ॥१॥ यस्तंतुनाभ इत्यादिमंत्रेण प्रार्थयेत्ततः ॥ एको देवः सर्वदेहे गूढो

---

१ पंचमोऽध्यायः । २ मायाजन्यम् । ३ कार्यत्वात् ।

व्यापी च सर्वतः ॥२॥ सर्वप्राण्यंतरात्माऽसावध्यक्षः सर्वकर्मणाम् ॥ सर्वभूताश्रयः साक्षी निर्गुणः शुद्धचिद्वपुः ॥३॥ ये तु पश्यंति तं धीरास्तेषां स्याच्छाश्वतं सुखम् ॥ नित्यं तं चेतनं बुद्ध्वा प्राप्नुयाच्छांतिमक्षयाम् ॥४॥ अशक्यं यत्सुखं वक्तुं तदेतदनुभूयते ॥ ॥ इति तत्त्वविदः प्राहुरुपायः श्रूयतामिह ॥५॥ विवेकयोगस्तद्बोधहेतुस्तत्त्वविवेकतः ॥ यथाशास्त्रं विविच्यानुभवंति दृढयोगतः ॥६॥ सूर्यचंद्रादयः सर्वभासका अपि तत्सुखम् ॥ नैव भासयितुं शक्ता भास्यंते किंतु तेन ते ॥७॥ चित्सुखात्मा स्वप्रकाशो भासते प्रथमं स्वयम् ॥ सूर्यादयस्तस्य चिता भासंते न चिताऽन्यया ॥८॥ एकाकी सूर्यवद्योऽयं सर्वं व्याप्नोति भासयन् ॥ तं यो वेत्ति स एवेशो नास्त्यन्यो हेतुरीशने ॥९॥ ज्ञान्येव विश्वकृत्कालः कालः सत्वादिभासकः ॥ प्रधानजीवयोः स्वामी हेतुः संसारमोक्षयोः ॥११०॥ विद्याफलमिदं बाह्यधीयोगं स्यात्कदाचन ॥ तद्धि शांत्यै प्रार्थयेत तं यो ब्रह्माणमीश्वरम् ॥११॥ हिरण्यगर्भं सृष्ट्वादौ वेदांस्तस्मै ददाति यः ॥ तं भासकं स्वात्मधियो मुमुक्षुः शरणं भजे ॥१२॥ निष्कलं निष्क्रियं शांतं निरवद्यं निरंजनम् ॥ भजे स्वयं भासमानं तं दग्धेंधनवह्निवत् ॥१३॥ निष्कलोऽवयवैर्हीनो हेतुहीनो निरंजनः ॥ निरंधनाग्निसाम्यं तु मायातत्कार्यवर्जनात् ॥१४॥ तादृशं परमात्मानं विदित्वैव विमुच्यते ॥ विना ज्ञानं न मुक्तिः स्यादितरैः कोटिसाधनैः ॥१५॥ यदा चर्मवदाकाशं वेष्टयिष्यंति मानवाः ॥ तदा देवमविज्ञाय मुक्तिर्न त्वस्ति तद्द्वयम् ॥१६॥ तपसा देवमाराध्य श्वेताश्वतरनामकः ॥ अत्याश्रमिभ्यः प्रोवाच ब्रह्मविद्यामृषिप्रियाम् ॥१७॥ वेदांते परमं गुह्यं नानोपाख्यानवर्णितम् ॥ नाऽप्रशां-

ताय दातव्यं देयं शिष्याय धीमते ॥११८॥ यस्य देवे परा भक्ति-र्यथा देवे तथा गुरौ ॥ तस्यैते कथिता ह्यर्थाः प्रकाशंते महात्मनः ॥११९॥ अंतःप्रविष्टः शास्तेति योंऽतर्यामी श्रुतीरितः ॥ सोऽस्मा-न्मुख्यगुरुः पातु विद्यातीर्थमहेश्वरः ॥१२०॥ इति श्रीविद्यारण्य-मुनिविरचिते अनुभूतिप्रकाशे श्वेताश्वतरविवरणो नाम द्वाद-शोऽध्यायः ॥१२॥

काण्वो याजुषशाखायां नानाख्यानोपबृंहिताम् ॥ ब्रह्मविद्यामु-वाचेमां संग्रहेण ब्रवीम्यहम् ॥१॥ बृहदारण्यकप्रोक्तैर्विराट्सूत्राद्यु-पासनैः ॥ स्याद्विराडादिरूपत्वं स विराडिह कथ्यते ॥२॥ उपास्ते-र्महिमा तेन भात्युपासनमिच्छतः ॥ मुमुक्षुस्तु विराडादिदोषान्दृष्ट्वा विरज्यते ॥३॥ अध्यायस्य तृतीयस्य चतुर्थब्राह्मणे श्रुतम् ॥ वैराजं वपु-रेतच्च शरीरांतरकारणम् ॥४॥ इदं नरगवाश्वादि वपुस्तत्सृष्टितः पुरा ॥ आत्मासीत्पुरुषाकारो ब्रह्मांडाख्यशरीरभृत् ॥५॥ प्रत्यग्रूपः पराग्रूपा-द्व्यावृत्तोऽनुभवात्मकः ॥ प्रथते यः स आत्मेति प्राहुरात्मविदो बुधाः ॥६॥ बहिर्मुखेन न ज्ञातं प्रत्यक्तत्त्वमतिं विना ॥ यदज्ञातं परं तत्त्वं तद्भवेत्सर्वकारणम् ॥७॥ विराडपि ततो जज्ञे त्रैलोक्या-त्मकदेहवान् ॥ यथोक्तज्ञानकर्मभ्यामेवं प्रत्यग्विराडभूत् ॥८॥ स एष परमोऽप्यात्मा कोशपंचकधारणात् ॥ संवृतः पुरुषाकारः कामावि-द्याद्युपप्लुतः ॥९॥ सोऽनुवीक्ष्यात्ममोहोत्थं वैराजं रूपमात्मनः ॥ नापश्यदपरं किंचित्सोऽहमस्मीत्यथाऽभ्यधात् ॥ १० ॥ अहमित्येव नामास्य संपन्नं तेन लौकिकाः ॥ तत्सृष्ट्वा स्वं स्वमात्मानमहमित्य-भिचक्षते ॥११॥ कोशपंचकयुक्तस्य प्रत्यक्तत्त्वस्य नाम तत् ॥ विराजा कृतमित्येतत्सर्वसाधारणं मतम् ॥१२॥ असाधारणदेहस्य

तत्तत्पित्रादिना कृतम् ॥ देवदत्तादिकं नाम जघन्यं पूर्वनामतः ॥१३॥ कस्त्वमित्येष पृष्टः सन्नादावहमिति ब्रुवन् ॥ पश्चाज्जघन्यं नामेदं वक्ति जिज्ञासवे जनः ॥१४॥ चिदेकरस आत्मैव कश्मले कोशपंचके ॥ एकतामभिसंपन्नोऽहंकारोत्पत्तिमात्रतः ॥१५॥ बहवोऽतीतकल्पेऽन्य आसन्यद्यप्युपासकाः ॥ तथापि भावनाधिक्यादेक एव विराडभूत् ॥१६॥ निःशेषेणासुरं पापं दग्धवान्बहुजन्मभिः ॥ ततो विराडभूदन्योऽप्येवं दग्ध्वा भवेद्विराट् ॥ १७ ॥ दग्धपापोऽप्यनात्मज्ञो देहादावभ्यमन्यत ॥ ततः स्वनाशमाशंक्य सोऽबिभेदस्मदादिवत् ॥१८॥ स्रजं हि कल्पयित्वाऽस्ते तद्भयादाकुलेंद्रियः ॥ एवं नश्वरदेहादि प्रतीच्यारोप्य कंपते ॥१९॥ आलोचयेत्स्रजस्तत्त्वं भीतिध्वस्त्यै यथा नरः ॥ विराडालोचयत्तद्वत्प्रतीचस्तत्त्वमादरात् ॥२०॥ आलोचितं यथा तत्त्वमपास्तध्वांतवद्भवेत् ॥ अनन्यानुभवं साक्षाद्ददर्शैकात्म्यमात्मनि ॥२१॥ प्रत्यग्याथात्म्यविज्ञानशिखाप्लुष्टमहातमाः ॥ आत्माशेषपुमर्थोऽयं सोऽमन्यत ततो विराट् ॥२२॥ देहेंद्रियमनोबुद्धिभावाभावादिसाक्षिणः ॥ प्रतीचोऽन्यत्किमप्यत्र नास्ति कस्माद्बिभेम्यहम् ॥२३॥ अन्वयव्यतिरेकाभ्यां स्वमात्मानं यदा पुमान् ॥ प्रतीच्येवानुसंधत्ते ब्रह्माऽस्मीति तदेक्षते ॥२४॥ प्रत्यग्दृष्ट्या तदज्ञानं न तज्जं चेक्षते स्वतः ॥ ब्रह्म प्रतीचोरैकात्म्यात्तद्दूरीकृत्य गर्जति ॥२५॥ प्रत्यक्ता ब्रह्मणो रूपं ब्रह्मता चात्मनः स्वतः ॥ एवं सति कुतो मे भीरिति विद्वांस्त्रपायते ॥२६॥ ब्रह्मविद्यामृते नान्यद्भयहेतुविनाशकृत् ॥ अतोऽवबोधादेवास्य भयं वीयाय सर्वतः ॥२७॥ कस्माद्भेष्यदीशोऽयं द्वितीयात्खलु तद्भयम् ॥ द्वितीयो नेश्वरस्यास्ति ततो निर्भय एव सः ॥२८॥ननु प्रजा-

पतेरैक्यदर्शनं कुत उद्भवौ ॥ शास्त्राचार्यादितद्धेतोरसत्वात्तदसंभवः ॥२९॥ उच्यते महता पुण्यपुंजपाकेन तत्पदम् ॥ वैराजं लब्धवांस्तेन ज्ञानमस्योद्भवौ स्वतः ॥३०॥ ज्ञानमप्रतिमं यस्य वैराग्यं च जगत्पतेः ॥ ऐश्वर्यं चैव धर्मश्च सहसिद्धमिति स्मृतिः ॥३१॥ एवं सति स्वयं भाति वेदत्वाद्बुद्धवान्स्वयम् ॥ बोधध्वस्तात्ममोहस्याप्यरतिः समजायत ॥३२॥ स्वाभीष्टवस्त्वलाभेन चेतसो याऽनवस्थितिः ॥ अरतिः सा सिसृक्षोःश्च वस्त्वलाभादजायत ॥३३॥ ननु विज्ञानविध्वस्तावविद्यायाः कुतो रतिः ॥ ध्वस्तांध्यस्यापि सा चेत्स्यादनिर्मोक्षः प्रसज्यते ॥३४॥ अप्युत्पन्नात्मबोधानामधिकारासमाप्तितः ॥ अरत्यादि यथा दृष्टं तथैव स्यात्प्रजापतेः ॥३५॥ अधिकारो यस्य यावान् भुंक्ते भोगे स तावति ॥ कुतो न मुच्यते मुक्तिप्रतिबंधस्य संक्षयात् ॥३६॥ सत्यामप्यात्मविद्यायां यो दोषो न निवर्तते ॥ तेन दोषेणानुमेयोऽधिकारो विदुषामसौ ॥३७॥ प्रबलारब्धवेगेन कामुकः सन्प्रजापतिः ॥ एकं देहं स्वभोगार्थमसृजन्मिथुनात्मकम् ॥३८॥ तद्द्वेधाऽपातयद्देहमभूतां दंपती[1] उभौ ॥ मनुः पुमान्वधूर्ज्ञेया शतरूपाऽत्र नामतः ॥३९॥ तयोः संभोगतो जाता मनुष्या दंपती पुनः ॥ नानादेहानगृह्णीतां ताभ्यां द्वंद्वानि जज्ञिरे॥४०॥ गवाश्वरासभाजाविप्रमुखा आपिपीलिकम् ॥ प्राणिनो मिथुनात्मानो जाताः कर्मानुसारतः ॥४१॥ मुखबाहूरुपादेभ्यो वह्नींद्रवसुभूमिकाः॥ देवता असृजद्ब्रह्मा चातुर्वर्ण्यनियामिकाः ॥४२॥ तत्रेंद्रादीन् भिन्नदेवान्मन्यंते यागभूमिषु ॥ कर्मिणस्तदसज्ज्ञेयं विराडेवाऽखिला इमे ॥४३॥ अविद्वदधिकारित्वात्कर्मणां भिन्नदेवताः ॥ उच्यंतां कर्मकां-

---

1 स्त्रीपुरुषौ ।

डेन वस्तुतस्तु न तत्तथा ॥४४॥ विराजो जीवतामाहुः केचिदन्ये परात्मताम् ॥ उभयं युक्तमेवैतद्विवक्षाया विशेषतः ॥४५॥ सोपाधिकविवक्षायां जीव एव विराड् भवेत् ॥ निरुपाधिविवक्षायां परमात्मैव नेतरः ॥४६॥ वयमप्येवमेवेति यद्युच्येत तथास्तु तत् ॥ सृष्ट्वा विराड् भोक्तृवर्गं भोग्यमन्नमचीकॢपत् ॥४७॥ पूर्वजन्मनि मर्त्यः सन्कृत्वा सोऽज्ञानकर्मणी ॥ अमृतानसृजद्देवान्नह्यते तन्महाद्भुतम् ॥४८॥ सृष्ट्वाऽखिलमयं देवमहमस्म्यखिलं जगत् ॥ ईदृशो महिमा ज्ञेयः कृतयोर्ज्ञानकर्मणोः ॥४९॥ वर्णितो[1]ऽयं प्रयत्नेन ज्ञानकर्मफलोर्जितः[2] ॥ उपासितुः प्रवृत्त्यर्थं निवृत्त्यर्थं मुमुक्षतः ॥५०॥ सृष्ट्वैश्वर्ये स्वतंत्रत्वं तत्कामी बहु मन्यते ॥ दोषानेव विवेक्यत्र बहूनुत्प्रेक्षते[3] धिया ॥५१॥ अविद्यपटसंवीत[4]चक्षुषामियदेव हि ॥ वैदिकं साधनं ज्ञेयं ज्ञानकर्मस्वभावकम् ॥५२॥ तच्च कर्त्रादि सापेक्षं विरंच्यांतफलप्रदम् ॥ जन्मादिविक्रियाषट्कयुतं सातिशयं जडम् ॥५३॥ दुःखानि च विचित्राणि संत्येव बहुजन्मसु ॥ अनेकक्लेशयुक्तेन दुर्लभं तपसा विना ॥५४॥ कथंचित्[5]साधितेऽप्यस्मिन्परानंदघनं प्रभुम् ॥ अंतर्भाव्य विराट्पिंडे स्थातव्यं हि जुगुप्सिते ॥५५॥ न केवलं पिंडवासस्तादात्म्यं चाभिमानतः ॥ ततो भयं भक्षणाय पितुर्मुखविदारणात् ॥५६॥ चांडालानां तु नेयं भीः किंतु पन्नगजन्मनः ॥ को भेदः स्याद्विराड्जन्मन्युरगाः पुत्रभक्षिणः ॥५७॥ कृच्छ्रा[6]द्भये प्रशांतेऽपि जग्राहाथारतिग्रहः ॥ क्रियमाणे प्रतीकारे गर्दभादिशरीरता ॥५८॥ एकयोनौ सकृज्जातः क्लेशं सोढुं न शकु-

१ महिमा । २ अधिको महिमा । ३ उद्भावयति । ४ आच्छादितं चक्षुर्येषां तेषाम् । ५ महत्कष्टेन । ६ कष्टात् ।

यात् ॥ अनंतयोनिष्वसकृज्जायमानस्य का कथा ॥५९॥ निस्तरेद्वि-द्यया चेत्किं बकबंधप्रयासतः ॥ अथ विद्यामुपेक्ष्योर्ध्वं किं विद्यां प्रार्थयिष्यते ॥६०॥ क्लेशेन महतोपास्य बहुयोनीः प्रविश्य च ॥ विद्यान्वेषणतः श्रेय इदानीमेव वेदनम् ॥६१॥ एवं विचार्य बहुश-स्तूर्णमेव मुमुक्षति[1] ॥ निवृत्तः सर्वबाह्यार्थात्प्रमेयं मातुमर्हति[2] ॥६२॥ अधिकारी साधितः[3] स्यादेवं फलविचारतः ॥ तेन प्रमातुं यद्योग्यं तदिदानीं निरूप्यते ॥६३॥ उपादेयस्य मेयस्य[4] वाच्या संभावना[5] यथा ॥ हेयसंसारहेतुश्च वक्तव्यो यत्नतस्ततः ॥६४॥ संसाराख्य-महाव्याधेः किं मूलमिति चिंतिते ॥ तद्ध्वस्तये चिकित्सेयं तदा फलवती भवेत् ॥६५॥ स्वत आनंदयाथात्म्येऽप्यबोधाद्दुःखसंप्लुतिः ॥ सोऽबोधोऽनर्थहेतुत्वान्निर्देष्टव्यश्चिकित्सितुम् ॥६६॥ अबुद्धमात्मन-स्तत्त्वं प्रमातुं योग्यमागमैः ॥ निर्देष्टव्यं तदप्यत्र संभावयितुमंजसा ॥६७॥ तमबोधं तच्च मेयमव्याकृतगिरा श्रुतिः ॥ निरदिक्षच्छ्रुतिः सा तु न्यायेनात्र विचार्यते ॥६८॥ तद्धेदं तर्ह्यविस्पष्टमासीदव्या-कृताभिधम् ॥ इत्येतस्मिन् श्रौतवाक्ये पदार्थस्तावदीर्यते ॥ ६९ ॥ अज्ञानात्मन्यशेषेण लीनं बीजस्वरूपधृक् ॥ तच्छब्देन जगत्प्रोक्तं परोक्षार्थाभिधायिना ॥७०॥ अव्याकृतस्य जगतो भूतकालाभिसं-गतेः ॥ बुभुत्सुं प्रति पारोक्ष्यात्तच्छब्दस्तत्र युज्यते ॥७१॥ ऐति-ह्यार्थे हशब्दः स्यात्सुखेनार्थावबुद्धये ॥ तर्केणोक्तो धियः क्लेशः परमाण्वनुमानवत् ॥७२॥ अचिंत्याः खलु ये भावा न तांस्तर्केण योजयेत् ॥ नाप्रतिष्ठिततर्केण गंभीरार्थस्य निश्चयः ॥७३॥ नामरू-

१ कथं हि मुक्तः स्यामितीच्छति। २ ऐक्यं साक्षात्कर्तुम्। ३ फले हि कथिते तत्कामनावानधिकारी सिद्धः। ४ जीवब्रह्मैक्यस्य। ५ भावना वक्तुं योग्या भवति। ६ सिद्धेऽपि। ७ अज्ञानं।

पादिविकृतं पराङ्मानेन[1] भासितम् ॥ इदंशब्देन निखिलं जगदेत-
दुदीर्यते ॥७४॥ सामानाधिकरण्येन तदिदंपदयोः श्रुतम् ॥ कार्य-
कारणयोरैक्यं व्याकृताव्याकृतात्मनोः ॥७५॥ एकस्य जगतोऽवस्थे
व्याकृताव्याकृतात्मिके ॥ अवस्थयोर्विभेदेऽपि तद्धर्मी न हि भिद्यते
॥७६॥ बाल्ययौवनभेदेऽपि देवदत्तो न भिद्यते ॥ ततो जगदभेदेन
सामानाधिकरण्यगीः ॥७७॥ नामरूपाद्यभिव्यक्तेः प्राक्तनः काल
उच्यते ॥ न हीत्यनेन शब्देन स कालो लोककल्पितः ॥७८॥
यद्यप्यव्याकृते कालव्यक्तिर्नास्ति तथाप्यमी ॥ लोकाः प्रलयकालत्व-
व्यवहारं प्रकुर्वते ॥७९॥ जगतोऽस्यानभिव्यक्तिरव्याकृतगिरोच्यते[2] ॥
न जगत्प्रागवस्थायां व्यक्तं गर्भस्थपुत्रवत् ॥८०॥ आसीदिति च
सत्तत्त्वमधिष्ठानतयोदितम् ॥ तथा च भावरूपत्वाज्जगद्व्याकृति-
मर्हति ॥ ८१ ॥ अव्याकृतिवचस्त्वेवमवतार्यास्य वर्णिताः ॥
पदार्था अथ वाक्यार्थो न्यायेनैव निरूप्यते ॥ ८२ ॥ यस्य
वेदांतमेयत्वं कारणं जगतश्च यत् ॥ अव्याकृतं तदेवात्र वा-
क्यार्थो द्विविधं हि तत् ॥ ८३ ॥ चित्प्राधान्यादविद्यायाः
प्राधान्याच्च द्विधाऽद्वयम् ॥ यच्चिद्वस्तु प्रमेयं तदविद्या तु विकार-
कृत् ॥८४॥ न चिद्वस्तु विवादार्हं तेन सर्वार्थसिद्धितः ॥ अज्ञोऽह-
मित्यविद्यापि प्रसिद्धैवानुभूतितः ॥८५॥ नासदासीन्नो सदासीत्तम
आसीदिति श्रुतिः ॥ आसीदिदं तमोभूतमप्रज्ञातमिति स्मृतिः ॥८६॥
अज्ञानत्वात्प्रमाणेन ज्ञातव्यमिति मेयता ॥ अज्ञानस्य विकारित्वा-
त्कारणत्वं च संभवेत् ॥८७॥ मायां तु प्रकृतिं विद्यादीशो मायीति
हि श्रुतिः ॥ दैवी ह्येषा गुणमयी मम मायेति च स्मृतिः ॥८८॥

---

१ बहिर्मानेन । २ तद्धीदं तर्ह्यव्याकृतमासीदिति श्रुत्या ।

इत्यव्याकृतवाक्यार्थो न्यायेन सुनिरूपितः ॥ अथ व्याकृतवाक्यार्थः क्रमात्प्राप्तो निरूप्यते ॥८९॥ व्याकृतं द्विविधं देहसृष्टिर्जीवप्रवेशनम् ॥ देहादिर्विषयत्वेन प्रवेशात्पूर्वमुच्यते ॥९०॥ अव्याकृतं यत्पूर्वोक्तमरूपकमनामकम् ॥ तदिदं नामरूपाभ्यामेव व्याक्रियते स्वयम् ॥ ९१ ॥ सुषुप्तादुत्थिती राज्ञः स्वयमेव यथा तथा ॥ जग्धाशेषजगन्मूर्तेरव्यक्ताद्व्याकृतिर्मुहुः ॥ ९२ ॥ नामरूपे तु शब्दार्थौ न ताभ्यामतिरिच्यते ॥ जगत्किंचिद्घटादौ हि द्वयमेव समीक्ष्यते ॥९३॥ प्रक्रियानियमो नात्र पुंव्युत्पत्तिप्रधानतः ॥ अतः श्रुतिषु सृष्ट्यादिविगानं बहुधेक्ष्यते ॥ ९४ ॥ यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि ॥ सा सैव प्रक्रियेह स्यात्साध्वी सा चाऽनवस्थिता ॥९५॥ विस्पष्टत्वं व्याकुलत्वं शुक्तिकारजतादिवत् ॥ स्पष्टमव्याकृतान्मोहान्मिथ्याज्ञानमिदं जगत् ॥९६॥ नामरूपाध्यास एवं व्याकृतः प्रतिपादितः ॥ प्रवेश्यस्यात्र जीवस्य प्रवेशः प्रतिपाद्यते ॥९७॥ सर्वशास्त्रारंभ एष यदर्थस्तद्विबुद्धये ॥ स एष इह देहेषु प्रविष्ट इति गीयते ॥९८॥ स एषोऽत्रानखाग्रेभ्यः[1] प्रविष्ट इति वेदगीः ॥ व्याख्यायतेऽसौ पदश आदौ मीमांस्यते त्वथ ॥९९॥ स इत्यनेन शब्देन प्रकृतार्थाऽवमर्शिना ॥ अव्याकृताध्यक्ष आत्मा यः पुरोक्तः स उच्यते ॥१००॥ यद्वा विराडधिष्ठानं ब्राह्मणादावुदीरितम् ॥ आत्मशब्देन तस्यात्र परामर्शो भविष्यति ॥१०१॥ तच्छब्देन परामृष्टः साक्ष्यव्याकृतभासकः ॥ एतच्छब्देन कार्यस्थः प्रत्यक्ष उपदिश्यते ॥२॥ अद्वितीयमधिष्ठानं कार्यस्थः सद्वयस्तयोः ॥ स एष इत्यभेदोक्तिर्दुष्करेति न चोद्यताम् ॥३॥

---

१ स एष इह प्रविष्ट आनखाग्रेभ्यः ।

अज्ञातवस्तुतत्त्वस्य दुष्करं नास्ति किंचन ॥ नीलीकृतं नभः पश्ये-च्चक्षुषा नीलवस्त्रवत् ॥४॥ योग्यायोग्यव्यवस्थेयं मानव्यवहृतौ भवेत् ॥ कल्पनामात्रनिष्पत्तेर्नापेक्षाऽज्ञानभूमिषु ॥५॥ इहेत्यनेन सूत्रादिस्थाणुपर्यंतविग्रहाः ॥ उच्यंते तेषु जीवोऽयं विस्पष्टमुपलभ्यते ॥६॥ प्रविष्ट इति शब्देन चिदाभासतमोन्विता ॥ जीवत्वेनोपलब्धिर्या चितः सैषाऽभिधीयते ॥७॥ चिदाभासप्रवेशस्तु प्रत्यङ्मोहे स्वतोऽभवत् ॥ तत्कार्येष्वनुवृत्तः स उपाधिश्चित्प्रवेशने ॥८॥ जपाकुसुमरक्तत्वं स्फटिके कल्प्यते यथा ॥ चिदाभासप्रवेशोऽयं चित्यध्यारोप्यते तथा ॥९॥ सूत्रादिस्थाणुपर्यंतं जगत्सृष्ट्वात्ममायया ॥ स्वाभासैकसहायेन स एव प्राविशत्परः ॥१०॥ आनखाग्रेभ्य इत्युक्त्या मर्यादाऽस्य प्रवेशने ॥ उक्ता स्पर्शेन चैतन्यं नखाग्रावधि लक्ष्यते ॥११॥ सामान्येन विशेषाच्च चिद्देहं व्याप्य वर्तते ॥ दृष्टांताभ्यां द्वयी वृत्तिर्द्विविधाभ्यामिहोच्यते ॥१२॥ दारु कृत्स्नमभिव्याप्य यथाग्निर्दारुणि स्थितः ॥ संव्याप्य तद्वदखिलं देहमात्मा व्यवस्थितः ॥१३॥ तस्थावसंव्याप्य यथा क्षुरपात्रं क्षुरस्तथा ॥ श्रोत्रादिनाडिमध्यस्थस्तनुमव्याप्य संस्थितः ॥१४॥ क्षुरपात्रे स्थानभेदाद्विभज्यंते यथा क्षुराः ॥ चैतन्यानि विभिद्यंते तथा नाडीविभेदतः ॥१५॥ प्राप्नोति वृत्ती द्वे जीवः स्वप्नजाग्रदवस्थयोः ॥ सामान्यवृत्तिमेवैकां सुषुप्ते प्रतिपद्यते ॥१६॥ सामान्यवृत्तिर्या सात्र जीवनायोपपद्यते ॥ विशेषवृत्तयो देहे शब्दाद्यालोचनोद्यताः ॥१७॥ प्रवेशवाक्यं पदशस्तात्पर्याच्च स्फुटीकृतम् ॥ तदनुग्राहको न्याय इदानीं प्रविचार्यते ॥१८॥ देवदत्तः परिच्छिन्नः सांशश्चाऽतो गृहं विशेत् ॥ निरंशः सर्वगश्चात्मा कथं देहे विशेदसौ ॥१९॥ अप्र-

विष्टस्वभावोऽयं दिग्देशाद्यनभिप्लुतेः । कल्पितोऽस्य प्रवेशः स्याज्जल-
पात्रार्कबिंबवत् ॥२०॥ विभागाद्यंशवैषम्येऽप्यस्ति साम्यं विवक्षितम्॥
उपाधिस्थोपलब्ध्यादिसाम्यं केन निवार्यते ॥२१॥ उपाधावुपलभ्य-
त्वमन्यथात्वेन भासनम् ॥ बहुत्वभानमित्येतद्दृष्टदार्ष्टांतयोः समम्
॥२२॥ तेजोधिकं रवेर्बिंबमशक्यं द्रष्टुमंजसा ॥ तथापि जलमध्ये
तद्बिंबं सम्यगवेक्षते ॥२३॥ स्वयंप्रकाश आत्मैवं नोपलभ्योऽनुपा-
धिकः ॥ जडदेहाद्युपाधौ तु विस्पष्टमुपलभ्यते ॥२४॥ जीवत्वभ्रां-
तिरेषैवं प्रत्यग्बोधोपयोगतः ॥ जलपात्रार्कसाम्येन प्रवेश इह
कल्प्यते ॥२५॥ यथा सृष्ट्यादयः क्लृप्ताः प्रवेशोऽपि तथेक्ष्यताम् ॥
युक्त्या नैवोपपद्यंते सृष्ट्याद्याः कल्पितास्ततः ॥२६॥ नन्वेवं पर
एवात्र प्रविष्टश्चेत्तदा जनाः॥ पश्यंत्येतं विनाशास्त्रमिति शास्त्रं वृथा
भवेत् ॥२७॥ अहं प्राणिम्यहं वच्मि पश्याम्येतच्छृणोमि तत् ॥
मन्येऽहमित्यहंबुद्ध्या दृष्ट एवाखिलैः परः ॥२८॥ उच्यते तन्न
पश्यंति प्रविविक्तं स्वतो जनाः ॥ नो श्वासभाषणे दृष्टिश्रुती वा
स्तोऽस्य नो मितिः ॥२९॥ प्रविष्टस्यास्ति चेच्छ्वासभाषणाद्यस्तु
तावता ॥ प्रवेष्टरि किमायातं शास्त्रबोध्यः स एव हि ॥३०॥ प्रवि-
ष्टस्य प्रवेष्टुश्च रूपाभेदेऽपि भिन्नताम् ॥ प्रविष्टत्वाप्रविष्टत्वधर्माभ्यां
को निवारयेत् ॥३१॥ प्रविष्टं येऽत्र पश्यंति नाप्रविष्टममी विदुः ॥
व्याधत्वेन प्रपश्यंतो न विदू राजपुत्रताम् ॥३२॥ व्याधोऽयमित्य-
सावुक्तिर्योजयेत्प्राणसंकटे ॥ राजदेवादिकोक्तिस्तु भवेद्बहुफलप्रदा
॥३३॥ तद्वत्प्रविष्टदृष्टिर्या सा संसारे नियोजयेत् ॥ अप्रविष्टात्म-
दृष्टिस्तु मोचयेत्सर्वसंकटात् ॥३४॥ अतोऽप्रविष्टदृष्ट्यर्थं निंद्यते हि
प्रविष्टदृक् ॥ प्रविष्टदर्शनं यत्स्मान्न तद्दर्शनमात्मनः ॥३५॥ स्वतः

परोऽपि देहादौ प्रविष्टोऽकार्त्स्न्यदोषतः ॥ दूषितो दर्शनं तस्य न भवेत्परदर्शनम् ॥३६॥ अकृत्स्नत्वं यथाऽस्य स्याद्व्यवहारे तथो-च्यते ॥ श्वासयोगात्प्राणिता स्याद्वक्ता वदनयोगतः ॥३७॥ द्रष्टा दर्शनयोगेन श्रोता श्रवणयोगतः ॥ मंता मननयोगेन स्प्रष्ट्रादौ योज-येत्तथा ॥३८॥ एवं चाहं प्राणितेति ज्ञाते वक्त्राद्यसंग्रहः ॥ वक्ता-हमित्यपि ज्ञाते प्राणित्रादेरसंग्रहः ॥ ३९ ॥ यतिदीक्षितचोरादिभू-मिकां धारयेन्नटः ॥ तत्र दृष्टे दीक्षितेऽन्ये दृष्टा यत्यादयो न हि ॥ ४० ॥ प्राणनादिकृतां मध्य एकैकं यः समीक्ष्यते ॥ न स जानात्यकृत्स्नत्वादेतदीक्षितवस्तुनः ॥४१॥ इत्युक्तं व्याकृतं सर्वं जडा-जडविभागवत् ॥ आरोपोऽयं तन्निवृत्त्यै विद्यासूत्रमिहोच्यते ॥४२॥ आत्मेत्येवमुपासीतेत्येतत्सूत्रमुदाहृतम् ॥ उक्त्वा पदार्थं सूत्रानुग्रा-हको न्याय उच्यते ॥४३॥ यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ॥ यच्चास्य संततो भावस्तस्मादात्मेति कथ्यते ॥४४॥ व्याप्नोत्यनवशे-षेण सर्पादीन् स्रगिवाखिलान् ॥ कल्प्यानधिष्ठानतया प्रत्यङ्गात्मा भवेत्ततः ॥४५॥ सर्वाधिष्ठानसन्मात्र इत्यशेषजगत्प्रति ॥ अधिष्ठा-नतयाऽवाप्तिं श्रुतिर्ब्रूते सदात्मनः ॥४६॥ स्वचिदाभासमोहेन तदुत्था-नखिलान्यतः ॥ आदत्ते नात्मनः प्राज्ञस्तत आत्मेति तं विदुः ॥४७॥ पर आत्मनि सर्वेऽपि संप्रतिष्ठंत एकले ॥ पृथिव्याद्या अनात्मान इति चाथर्वणे वचः ॥४८॥ आत्माभासः पराचीना धीवृत्तिर्विषयो-न्मुखा ॥ प्रत्यग्गतिर्यतोऽतोऽसावात्मेत्युक्तो मनीषिभिः ॥४९॥ विश्वो हि स्थूलभुङ्नित्यस्तैजसः प्रविविक्तभुक् ॥ आनन्दभुक् तथा प्राज्ञ इति चागमशासनम् ॥५०॥ अव्यावृताननुगतः पूर्णः स्वात्मन्यव-स्थितः ॥ यतोऽस्य संततो भावस्तस्मादात्मेति शब्द्यते ॥५१॥ तद्वि-

ष्णोरिति मंत्रेऽपि तद्विष्णोः परमं पदम् ॥ चक्षुर्वेदाततं व्योम्नि व्याचष्टे प्रत्यगात्मनि ॥५२॥ चतुर्विधनिरुक्त्याऽत्र चत्वारोऽर्थाः प्रकीर्तिताः ॥ अधिष्ठानं कारणत्वं जीवभावो विमुक्तता ॥५३॥ यन्मुक्तरूपं साक्षित्वाद्व्याकृतेऽव्याकृतेऽपि तत् ॥ अतिरोहितमत्रात्मशब्देनैतद्धि सूत्रितम् ॥५४॥ आत्मशब्दधियोरात्मा विषयो नेति भाषितुम् ॥ सूत्रेऽस्मिन्निति शब्दोऽयं यथैतत्स्यात्तथोच्यते ॥५५॥ यत्रेति परशब्दः स्यात्तत्रोपचरितं वचः ॥ ज्येष्ठं पितेति पश्यंतीत्यादावेवमवेक्षणात् ॥५६॥ व्याकृताव्याकृते ये द्वे कल्पिते तेऽविचारतः ॥ एते वारयितुं सूत्र एवंकारमसूत्रयत् ॥५७॥ उपेति सामीप्यवाची तन्निष्ठा प्रत्यगात्मनि ॥ कार्यकारणरूपाभ्यां प्रत्यङ् हृदि य ईक्ष्यते ॥५८॥ एतस्य ब्रह्मसामीप्यं तत्त्वमस्यादिनोच्यते ॥ आसीतेति तु शब्देन कूटस्थत्वमसूत्रयत् ॥५९॥ व्युत्थाय कारणात्कार्यात्तत्त्वज्ञानवर्त्मना ॥ उपेत्य कूटस्थमजमासीतापरिणामवान् ॥६०॥ इत्यात्मशब्दे सूत्रार्थो वाक्यार्थश्चोपवर्णितः ॥ तदनुग्राहको न्याय आशंकापूर्वमुच्यते ॥ ६१ ॥ व्याकृताव्याकृताभ्यां तद्वस्तुतत्त्वं तिरोहितम् ॥ इति यच्छंकितं तन्न स्वरूपस्यातिरोहितेः ॥६२॥ स्वस्वरूपं तिरोधातुं न हि केनापि शक्यते ॥ विस्फार्यतामिहाऽक्षाणि किमक्षैरपराध्यते ॥६३॥ आपादयेयुः शब्दादीन्यद्यक्षाणि तथापि ते ॥ का हानिस्तस्य शब्दादेरेव तत्त्वं विबुध्यताम् ॥६४॥ तैः शब्दादितया भाति तत्त्वरूपतया न तु ॥ इति चेदत एवैतद्वेदवाक्येन बुध्यताम् ॥६५॥ न परोक्षत्वमाशंक्यं स्वस्वरूपत्वहेतुतः ॥ शब्दादितत्त्वं यद्बोद्धुः स्वरूपं तन्न चेतरत् ॥६६॥ एकस्याऽप्यत्र चित्तस्य सहकारिविभेदतः ॥ क्रमेण

ग्रहणं तत्त्वे शब्दादौ च कुतो न हि ॥६७॥ इति शंकोत्तरं प्रोक्तमेतत्सूत्रेण सूचितम् ॥ स्वरूपवाच्यात्मशब्दादतिरोधाऽनभासनात् ॥६८॥ ननु प्राणादियुक्तात्मबोधोऽकात्स्न्र्येन दूषितः ॥ सोऽकात्स्न्र्यदोषः शुद्धात्मबोधे कस्मान्न संभवेत् ॥६९॥ इत्याशंकापनुत्त्यर्थमत्रेदं श्रूयते स्फुटम् ॥ अत्र ह्येते सर्व एकीभवंतीति श्रुतेर्वचः ॥७०॥ प्राणा ह्युपाध्युपहिताः सर्वेऽप्यात्मान ईश्वरे ॥ शुद्धात्मन्येकतां यांति पुत्रभ्रात्रादयो यथा ॥७१॥ पुत्रो भ्राता पितेत्येको भिद्यते प्रतियोगिभिः ॥ पुत्रादयस्त एकस्मिंस्तस्मिन्यांत्येकतां ततः ॥७२॥ आत्मनोऽनवशेषेण संबंधो नात्मवस्तुनः ॥ रज्जुः सर्पादिवन्नातः प्रतीचः शिष्यते पराक् ॥७३॥ सर्वमज्ञातमेव स्याद्यस्मिन्नज्ञात आत्मनि ॥ ज्ञाते ज्ञातं च कृत्स्नोऽसौ तावत्त्वात्सर्ववस्तुनः ॥७४॥ प्रमाभासत्वमेतेन वाक्येनास्य निवारितम् ॥ मात्वं संभाव्यते तस्य पदनीयत्ववाक्यतः ॥७५॥ अस्य सर्वस्य जगत आत्मेति यदुदीरितम् ॥ तदेतत्पदनीयं स्यादिति वाक्यस्य योजना ॥७६॥ पदनीयेति शब्देन प्रमातुं योग्यतोच्यते ॥ अज्ञातत्वात्पुमर्थत्वात्प्रमातुं योग्यताऽऽत्मनः ॥७७॥ अव्याकृतव्याकृतयोरज्ञातात्मकता यतः ॥ अत आत्मातिरेकेण नाऽज्ञातार्थोऽस्ति कश्चन ॥७८॥ ज्ञेयार्थानंदयोर्यस्मात्समाप्तिः प्रत्यगात्मनि ॥ परमः पुरुषार्थोऽत आत्मा भवति नेतरः ॥७९॥ अज्ञातत्वं पुरा प्रोक्तमव्याकृतगिरा यथा ॥ ज्ञेयार्थस्य समाप्तिस्त्वां वक्त्यनेनेति वाक्यतः ॥८०॥ अनेनैतद्वेद सर्वमित्यात्मज्ञानमात्रतः ॥ सार्वज्ञमुक्तमानंदसमाप्तिस्तु प्रवक्ष्यते ॥८१॥ अन्यज्ञानेन नान्यस्य कचिदप्यवबुद्धता ॥ आत्मज्ञानेन सर्वस्य ज्ञानं कथमुदीर्यते ॥८२॥ सत्यमेवं भवेदेतद्यथा-

त्माऽप्यन्य इष्यते ॥ आत्माऽसावन्य इति च नानुन्मत्तस्य गीरियम् ॥८३॥ प्रत्यक्तत्त्वे परिज्ञाते जगत्तत्त्वं प्रबुध्यते ॥ इत्यत्र पद्दृष्टांतो यथावत्स विविच्यते ॥८४॥ एकं पादं यथाश्वस्य दृष्ट्वाऽश्वत्वमशेषतः ॥ दृष्टवानेव भवति दृष्टोऽश्व इति वर्णनात् ॥८५॥ एवं स्वदेहमात्रस्थे साक्षितत्त्वेऽवलोकिते ॥ अशेषजगतस्तत्त्वं लभ्येतैव न संशयः ॥८६॥ आनंदस्य समाप्तिर्या प्रत्यगात्मनि साऽधुना ॥ प्रदर्श्यतेऽनुभूत्याऽत्र स्पष्टं सार्वजनीनया ॥८७॥ वित्तात्पुत्रः प्रियः पुत्रात्पिंडः पिंडात्तथेंद्रियम् ॥ इंद्रियेभ्यः प्रियः प्राण आत्मा प्रियतमस्ततः ॥८८॥ स्वात्मभोगस्य हेतुत्वात्प्राणादौ प्रीतिरिष्यते ॥ न स्वतोऽतो न सा मुख्या वेश्याप्रीतिर्यथा तथा ॥८९॥ प्रतीचि निर्निमित्तैव सर्वावस्थास्वपीष्यते ॥ प्रीतिरभ्युष्णवत्तस्मान्मुख्याऽसाविति गम्यताम् ॥९०॥ सर्वांतरतरत्वेन युज्यते निर्निमित्तता ॥ बाह्येषु सनिमित्तत्वं प्रीतेः स्पष्टं गवादिषु ॥९१॥ व्याध्याद्युपद्रुतो लोको मृतिमप्यभिवांछति ॥ निर्निमित्तप्रियत्वे तु देहादेस्तत्र युज्यते ॥९२॥ अनात्मा प्रिय इत्येवं यो मुह्यति स पामरः ॥ विनाशित्वमुदाहृत्य मूढं तं बोधयेद्बुधः ॥९३॥ अनात्मा भोगकालेऽस्य सुखं यावत्प्रयच्छति ॥ तत्सहस्रगुणं दुःखं नाशकाले प्रयच्छति ॥९४॥ या प्रीतिरविवेकानां विषयेष्वनपायिनी ॥ व्युत्थाय विषयेभ्यस्तां प्रतीच्येव निवेशयेत् ॥ ९५ ॥ विषया इव न प्रत्यक्कदाचिदपि नश्यति ॥ अतो दुःखप्रदत्वं तु शंकितुं न च शक्यते ॥९६॥ सूत्रार्थज्ञमनुष्याणां मतिं विज्ञायते च न ॥ मुमुक्षवो गुरुं प्राप्य चोदयंत्यतिसंभ्रमात् ॥९७॥ यद्ब्रह्मविद्यया सर्वभावाप्तिं मन्वते नराः ॥ तद्ब्रह्म किं विदित्वाभूत्सर्वमित्येतदीर्यताम्

॥१९८॥ एवं मुमुक्षुभिश्चोद्ये कृते करुणया गुरुः ॥ अनायासेन तच्चोद्यं परिहर्तुं वचोऽब्रवीत् ॥१९९॥ ब्रह्मैव बोधात्प्राग्जीवो भूत्वात्मानमवेत्पुनः ॥ अहं ब्रह्मेति तद्बोधात्सर्वात्मकमभूत्तदा ॥२००॥ अवेत्सोपाधिरात्मायमात्मानं निरुपाधिकम् ॥ ज्ञातृज्ञानज्ञेयभेदान्न दोषोऽत्र मनागपि ॥१॥ अविविक्तस्तु देहाद्यैरात्मा भवति वेदिता ॥ विविक्तात्मा वेदितव्यो धीवृत्तिर्वेदनं भवेत् ॥२॥ अविद्यारोपनिह्नुत्यै तदात्मानमवेदिति ॥ आत्माभिमुखधीवृत्तिरात्मवेदनमुच्यते ॥३॥ आत्मानमेव तदवेदित्युक्तादेवकारतः ॥ निर्माल्यवत्परित्याज्यं देहादीत्यवगम्यते ॥४॥ त्याज्यमाने तु देहादावात्मैवैकोऽवशिष्यते ॥ परित्यक्तुमशक्यत्वादात्मानं निह्नुतेऽत्र कः ॥५॥ अहं ब्रह्मास्मि नो जीव इत्यवेद्ब्रह्मरूपताम् ॥ शोधितस्याहमर्थस्य युज्यते ब्रह्मरूपता ॥६॥ ब्रह्मता नात्मनोऽन्यत्र नात्मता ब्रह्मणोऽन्यतः ॥ यद्याथात्म्याप्रबोधात्तु तयोरेष विपर्ययः ॥७॥ अब्रह्मानात्मताहेतौ प्रत्यग्ध्वांते निवर्तिते ॥ आत्मानमेव ब्रह्मेति निर्विघ्नं प्रतिपद्यते ॥८॥ निवर्त्ये भेदाद्भिन्नोऽर्थो ब्रह्माहंपदयोर्भवेत् ॥ अब्रह्मानात्मते वार्ये एकस्मिन्नेव वस्तुनि ॥९॥ स्वानुभूत्यवसेयेऽस्मिन्प्रतीच्यब्रह्मतां जनाः ॥ आरोप्य शास्त्रगम्येऽस्मिन्ननात्मत्वमकल्पयन् ॥१०॥ अनुभूत्यवसेयोऽहं ब्रह्म शास्त्रसमर्पितम् ॥ अस्मीति बोधादारोपद्वयमत्र निवर्तते ॥११॥ अस्मीति वर्तमानोक्तेर्विद्याकालैव मुक्तता ॥ सिद्धाऽतोऽसौ न साध्या स्यादग्निहोत्रादिकार्यवत् ॥१२॥ तस्मात्तत्सर्वमभवदिति वाक्येन

---

१ ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदाऽहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवदथर्षीणां तथा मनुष्याणां तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चेति तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति सेदꣳसर्वं भवति ।

वेदनात् ॥ उच्यते सर्वभावाप्तिः सर्वज्ञत्वापवादतः ॥१३॥ स्वतः सर्वात्मकं ब्रह्म भात्यसर्वमिव भ्रमात् ॥ विद्यया भ्रांतिबाधेऽस्य सर्वत्वमवशिष्यते ॥१४॥ नन्वसौ सर्वभावाप्तिर्न विद्यामात्रतो भवेत् ॥ विनोत्तमत्वानुष्ठानकालदेवाद्यनुग्रहम् ॥१५॥ विप्रस्य फलदो वेदो न शूद्रस्याधमत्वतः ॥ देवादेरुत्तमस्यैव तथा विद्या फलप्रदा ॥१६॥ यागज्ञानमनुष्ठानाद्विना न स्वर्गदं तथा ॥ ब्रह्मज्ञानमनुष्ठानाद्विना सर्वाप्तिदं कथम् ॥१७॥ गर्भाधानमृतावेव नान्यकाले तथोत्तमे ॥ विद्या कृतयुगे सर्वभावं यच्छति नान्यदा ॥१८॥ राज्ञा कृषिफलं यद्वत्करार्थं प्रतिवध्यते ॥ सर्वभावस्तथा देवैर्यागभुग्भिर्निवार्यते॥१९॥ तस्मादनुत्तमे जन्मन्यननुष्ठायिनः कलौ ॥ युगे देवाघृणवतो न विद्या सर्वभावदा ॥२०॥ इति चोदयितुं यत्र चत्वारश्चोद्यहेतवः ॥ तद्यो य इत्यादि वाक्यैश्चतुर्भिस्तान्निरस्यति ॥२१॥ न तावदुत्तमं जन्म सर्वभावप्रयोजकम् ॥ उत्तमस्यापि देवादेः सर्वत्वं ब्रह्मबोधतः ॥२२॥ यो देवानामृषीणां वा मध्ये ब्रह्म व्यबुध्यत ॥ असावसावेव सर्वमभून्नान्यस्तु कश्चन ॥२३॥ मनुष्याणां तथा मध्ये ब्रह्मवित्सर्वभावभाक् ॥ विद्याविद्ये एव तस्मात्सर्वत्वाल्पत्वकारणे ॥२४॥ ब्रह्म वा इदमग्रेऽभूदिति विद्याधिकारिता ॥ श्रूयते ब्रह्मणो ब्रह्म सर्वजातिषु तत्समम् ॥२५॥ न पश्वादेः सर्वभावप्रसंगो बोधवर्जनात् ॥ शूद्रजातिश्च विदुरः सति बोधे विमुच्यते ॥२६॥ यागविद्येवात्मविद्या नानुष्ठानमपेक्षते ॥ फलदान इति ज्ञेयं वामदेवनिदर्शनात् ॥२७॥ ब्रह्मात्मत्वं वामदेवः पश्यन्मन्वादिरूपताम् ॥ प्रतिपेदे ह्यनुष्ठानावसरस्तत्र को वद ॥२८॥ न चितो वामदेवे वा मनौ वाऽन्येषु वा भिदा ॥ तेन मन्वादिचिद्वामदेवेन प्रत्यपद्यत ॥२९॥ यत्तु पुण्ययुगे सर्वभावो

न तु कलाविति ॥ तदसद्बोधसाध्यस्य पुण्यकालानपेक्षणात् ॥३०॥ न सूर्यग्रहणापेक्षो बोधान्निद्राक्षयः क्वचित् ॥ तथा न सर्वभावोऽयं कालभेदमपेक्षते ॥३१॥ य एतर्ह्यपि वेदाऽहं ब्रह्माऽस्मीति तदैव सः ॥ इदं सर्वं भवत्येव यदिदं जगदीक्ष्यते ॥३२॥ अविचारितरम्यस्य नामरूपात्मकस्य यत् ॥ जगतो वास्तवं रूपं सत्तत्त्वं ब्रह्म तद्भवेत् ॥३३॥ नराणामल्पधर्मत्वात्सर्वभावं दिवौकसः ॥ वारयंति हविर्भोक्तुं तैर्दत्तमिति चेन्न तत् ॥३४॥ [1]तस्य ज्ञातात्मतत्त्वस्य प्रध्वस्ततमसो यतेः ॥ इंद्रादयोऽपि नैवालं सर्वभावाप्तिवारणे ॥३५॥ यद्यपीशा नृणां देवास्तथापि ब्रह्मवेदिनः ॥ अनीशाः प्रत्युतैतेषामात्मा भवति तत्त्ववित् ॥३६॥ इत्थमादेयविद्यायाः सूत्रवृत्ती उदाहृते ॥ हेयाऽविद्या स्वकार्येण युक्ता सूत्रयति श्रुतिः ॥३७॥ स्वस्मादन्यां देवतां य उपास्ते स्वं न वेद सः ॥ इति सूत्रमविद्यायाः सकार्यायाः श्रुतीरितम् ॥३८॥ अचिंत्यशक्तिश्चिन्निष्ठा स्वाश्रयं मोहयेत्क्वचित् ॥ अविद्या साऽबोधनात्स्याज्जीवत्वभ्रांतिकारिणी ॥३९॥ नाश्रयं मोहयेद्याऽसावीश्वरत्वस्य कल्पिका ॥ वस्तुत्वभ्रांतिरेवास्यां हेया सा त्ववतिष्ठते ॥४०॥ सृष्टिप्रकरणे तत्र मायाकारः पुरोदितः ॥ अव्याकृतगिरा तस्य कार्यं व्याकृतमीरितम् ॥ ४१ ॥ कर्मिप्रकरणे त्वस्मिन्नविद्याकार ईर्यते ॥ स्वस्माद्भिन्ना देवतेति धीरविद्याविजृंभिता ॥४२॥ स्वस्य तत्त्वमविज्ञाय यागदानादिकर्मभिः ॥ स्वतोऽन्या देवताः पाति ह्यनड्वान्वणिजो यथा ॥४३॥ अपि भूरिपशोः पुंस एकस्मिन्नपि तस्करैः ॥ ह्रियमाणे पशौ दुःखं किमु सर्वापहारतः ॥४४॥

---

१ तस्य ह न देवाश्च नाभूत्या ईशत आत्मा ह्येषां॰ स भवत्यथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्यो ह्यस्मीति न स वेद यथा पशुरेव॰ स देवानाम् ।

सर्वस्वतुल्ये नृपशौ ब्रह्मधीपरिमोषिणा[1] ॥ ह्रियमाणे महद्दुःखं सर्वेषां च दिवौकसाम् ॥४५॥ तस्मादेषां न प्रियं तद्यन्मनुष्या विजानते ॥ ब्रह्मात्मत्वमतो देवाः प्रतिबध्नंति वेदनम् ॥४६॥ स्पष्टीकृतं पारतंत्र्यं पशुदृष्टांततो नृणाम् ॥ वर्णाश्रमादि तद्धर्मसृष्टिः कर्मार्थमीरिता ॥४७॥ नन्वेवं तस्य मुक्तिश्च स्यादेवात्मधियं विना ॥ अज्ञानकर्मणोः श्रुत्या सादरेणोपवर्णनात् ॥४८॥ नैवमात्मा किमज्ञातो मुक्तिदः कर्म वा महत् ॥ आम्नायकृषिवन्नायमज्ञातात्मा फलप्रदः ॥४९॥ अनधीतो यथा वेदो नार्थज्ञानेन पालयेत् ॥ अकृता वा कृषिः पाति नाकर्तारं फलार्थिनम् ॥५०॥ तथा स्वात्माऽप्यविज्ञातो मुमुक्षुं मोक्षदानतः ॥ न पालयत्यतो मुक्तिरज्ञस्य नहि कस्यचित् ॥५१॥ स्वात्माख्यलोकमज्ञात्वा यो देहाख्यस्वलोकतः ॥ प्रैत्यसौ पुनरप्यन्यं देहलोकं व्रजेद्दृढम् ॥५२॥ अनात्मविन्महत्पुण्यमश्वमेधादिकं यदि ॥ कुर्यान्नित्यफलायैतदथाप्यंते विनश्यति ॥५३॥ कृतस्य हि क्षयोऽवश्यं कोष्ठागारादिवद्भवेत् ॥ न मोक्षायादरस्तस्माच्छ्रुतावज्ञानकर्मणोः ॥५४॥ किंतु जीवन्मुक्तिकाले बोधहेयं विवेचितम् ॥ मुक्तिस्तु विद्या सूत्रेण सूचिता स्याद्विचारतः ॥५५॥ आत्मानमेव निर्द्वैतं स्वप्रभं प्रविचारयेत् ॥ विचारयति यस्तस्य फलं न क्षीयते क्वचित् ॥५६॥ कामी कामयते यद्यत्सुखं स्वर्गादिजं पुमान् ॥ अस्मादेवात्मनस्तत्तत्सृजते कर्म पूजितात् ॥५७॥ अविनाशोऽखिलानंदहेतुत्वं चेत्यदो द्वयम् ॥ न कर्मणां फले युक्तं युक्तं विद्याफले तु तत् ॥५८॥ सिद्धस्य व्यंजिका विद्या व्यक्तात्मा फलमुच्यते ॥ न ह्यात्मनो विनाशोऽस्ति नित्यं विद्याफलं ततः ॥५९॥ सार्वभौमादिकाः प्रोक्ता उत्त-

---

१ ब्रह्मबुद्धिचौरेण ।

रोत्तरवृद्धितः ॥ हिरण्यगर्भपर्यंता आनंदा आत्मबिंदवः ॥६०॥
ब्रह्मानंदस्य भूतानि मात्रां यांतीत्युदीरणात् ॥ तत्तत्कर्मानुसारेण
ब्रह्मानंदः स्फुरेन्नृणाम् ॥६१॥ तत्तद्विषयकामेन चित्तेऽस्मिन्व्याकु-
लीकृते ॥ आनंद आत्मभूतोऽपि स तिरोधीयते नृणाम् ॥६२॥
पुण्येन विषये लब्धे चित्ते स्वास्थ्यमुपागते ॥ आत्मानंदः स्फुरेत्ता-
वद्यावन्न व्याकुलांतरम् ॥६३॥ एवं च विषयानंदा ब्रह्मानंदस्य
बिंदवः ॥ सर्वानंदनिधिर्विद्याफलमित्येतदीरितम् ॥६४॥ आनंद-
बिंद्वभिव्यक्तिहेतुकर्मप्रसिद्धये ॥ ब्रह्मक्षत्रादिवर्णानां सृष्टिर्यत्नेन
वर्णिता ॥६५॥ वर्णाश्रमाभिमानी सन्नतत्त्वज्ञः पराङ्मतिः ॥ देवा-
दीनामाश्रयः स्यात्सर्वेषामापिपीलिकम् ॥६६॥ देवानां यागहोमा-
भ्यामृषीणां वेदपाठतः ॥ पितॄणां श्राद्धतो नृणां वस्त्रान्नगृहदानतः
॥६७॥ पशूनां तृणनीराभ्यामुच्छिष्टकणधान्यतः ॥ श्वाखुटिट्टिभमु-
ख्यानामेवं सर्वाश्रयो गृही ॥६८॥ कर्मणा नार्जितो यस्मान्न कश्चि-
दुपकारकृत् ॥ गृही देवादिभिस्तस्मादर्जितोऽभूत्स्वकर्मभिः ॥६९॥
स्वस्वकर्मार्जितत्वेन देवाद्याः स्वस्वदेहवत् ॥ अविनाशं सदेच्छंति
गृहिणः स्वोपकारिणः ॥७०॥ तत्त्वं बुध्वाऽननुष्ठानं नाशोऽयं
गृहिणो महान् ॥ एष देवादिभिः सर्वैर्न हि शक्यश्चिकित्सितुम्
॥७१॥ कर्मणामननुष्ठानं मृतिरोगादिना तु यत् ॥ नासाऽवात्यं-
तिको नाशो यस्मात्पश्चात्करिष्यति ॥७२॥ माभूत्सर्वस्वहानिर्नो
ब्रह्मयाथात्म्यविद्यया ॥ इति देवादयो विद्यां प्रतिबध्नंति यत्नतः
॥७३॥ नन्वनर्थकरे केन गृहीत्वायं प्रवर्तितः ॥ पारतंत्र्येऽमृतेनैव
धीमानत्र प्रवर्तते ॥७४॥ देवादिपारतंत्र्यं तु गृहिणामधिकारिणाम् ॥
मिथ्या धीमात्रहेतुत्वान्नाप्यविद्या प्रवर्तिका ॥७५॥ तर्हि प्रवर्तकं

ब्रूमः काम एव प्रवर्तकः ॥ काम एष क्रोध एष इत्यादि स्मृतिवाक्यतः ॥७६॥ अकामतः क्रिया काचिद्दृश्यते नेह कस्यचित् ॥ यद्यद्धि कुरुते जंतुस्तत्तत्कामस्य चेष्टितम् ॥७७॥ तस्मात्कामयते पूर्वं ब्रह्मचारी चतुष्टयम् ॥ जाया मे स्यादथापत्यमथ वित्तमथ क्रिया ॥७८॥ एतावानेव संसारे कामो नातोऽधिकः क्वचित् ॥ लोकांतरं कर्मफलं कर्मोक्त्यैवेरितं भवेत् ॥७९॥ असंभवे तु जायादेर्मनोवागादिषु क्रमात् ॥ आत्मजायादि संकल्प्य ध्यायेज्जायादिसिद्धये ॥८०॥ एवं कामप्रेरितः सन् याति कर्माधिकारिताम् ॥ अवरुद्धंति गृहिणं देवाद्या अधिकारिणम् ॥८१॥ इत्यविद्यासूत्रयुक्तोऽनर्थो यत्नेन विस्तृतः ॥ अयं निवर्त्यो विदुषा जीवतेति श्रुतेर्मतिः ॥८२॥ कर्मोपास्तिफलं कण्वः प्राहात्मब्राह्मणे तथा ॥ अव्याकृतं व्याकृतं च विद्याविद्ये ह्यतिस्फुटम् ॥८३॥ अथाध्याये चतुर्थे च कण्वः पंचमषष्ठयोः ॥ उपाख्यानानि बहुधा वक्ष्यत्यात्मावबुद्धये ॥८४॥ अजातशत्रुर्मैत्रेयी दध्यङ्ङित्युक्तनामभिः ॥ आख्यानान्यंकितानि स्युश्चतुर्थाध्यायगानि हि ॥८५॥ आश्वलश्चार्तभागश्च भुज्यूषस्तकहोलकाः ॥ गार्ग्युद्दालकशाकल्याः पंचमाध्यायगा इमे ॥८६॥ आख्यानान्येतदीयानि स्युः षष्ठाध्याय ईरितम् ॥ जनकस्य ह्युपाख्यानं संग्रहाद्विस्तरादपि ॥८७॥ उपाख्यानेषु सर्वेषु प्रत्येकं ब्रह्म वर्णितम् ॥ श्रुतैरेतैरुपाख्यानैर्ब्रह्मविद्या दृढा भवेत् ॥ ८८ ॥ यामात्मब्राह्मणे विद्यां कण्वः प्रोवाच सा स्फुटम् ॥ व्याख्याता प्रीयतां तेन विद्यातीर्थमहेश्वरः ॥२८९॥ इति श्रीविद्यारण्यविरचिते अनुभूतिप्रकाशे बृहदारण्यके कण्वविद्याप्रकाशो नाम त्रयोदशोऽध्यायः॥१३॥

अजातशत्रुरध्याये चतुर्थे ब्राह्मणैस्त्रिभिः ॥ विद्यां बालाकये प्राह

तां विस्पष्टमितो ब्रुवे ॥१॥ अजातशत्रुर्ब्रह्मात्मवेदनाच्छौर्यतोऽपि च ॥ अंतर्बहिश्च निःशत्रुः काश्यां राजा बभूव सः ॥२॥ गर्गगोत्रजविप्रोऽयं बालाकिर्नैव तत्त्ववित् ॥ किंतु प्राणोपासकोऽयं दर्पेण महता वृतः ॥३॥ अध्यात्ममधिदैवं च ब्रह्म स्यात्प्राणदेवता ॥ समष्टिव्यष्टिरूपाऽसाविति गार्ग्यस्य निश्चयः ॥४॥ रव्याद्या व्यष्टयः प्रोक्ताः समष्टिस्तु विराड्भवेत् ॥ न मुख्यब्रह्मतैतेषामिति राज्ञो विनिर्णयः ॥५॥ तस्मादुपासको गार्ग्यो न मुख्यं ब्रह्म वेत्त्यतः ॥ अन्वयव्यतिरेकाभ्यां बोधयामास तं नृपः ॥६॥ स्याद्विज्ञानमयो भोक्ता न प्राण इति जागरे ॥ विवेको दुःशको यस्मादत्र द्वावपि सुस्थितौ ॥७॥ यो विज्ञानमयः सुप्तावसावुपरतिं गतः ॥ वर्तते पूर्ववत्प्राणो विवेकः सुशकस्तदा ॥८॥ तस्मात्सुप्तं पुरुषमामंत्र्य प्राणनामभिः ॥ अप्रबोधाद्भोक्तृत्वं प्राणस्याऽस्पष्टयन्नृपः ॥ ९ ॥ यदि भोक्ता भवेत्प्राणो जाग्रद्वच्छब्दमागतम् ॥ अश्रोष्यन्नाश्रृणोत्तस्मान्न स्याद्भोक्तोपलादिवत् ॥१०॥ श्रोत्रादीनामुपाधीनां सुप्तावुपरतत्वतः ॥ यथा जीवो न वेत्त्येवं प्राणोपीत्यसदुच्यते ॥ ११ ॥ नेंद्रियाणां भवेत्स्वापो यदि प्राणप्रधानता ॥ नामात्याः शेरते यस्माद्राज्ञि स्वामिनि जाग्रति ॥१२॥ देवताप्रतिषेधार्थं बोध्यते चंद्रनामभिः ॥ तदबोधादभोक्तृत्वं देवतायाः सुनिश्चितम् ॥१३॥ प्राणस्याभोक्तृतां गार्ग्यो व्यबुध्यत ततो नृपः ॥ विज्ञानमयबोधाय चक्रे यत्नमुपायतः ॥१४॥ आपिष्यापिष्य बहुशः सुप्तं राजा व्यबोधयत् ॥ आपेषणोत्थसंक्षोभात्ततोऽसौ प्रत्यबुध्यत ॥ १५ ॥ मृतकल्पमिमं देहं संचितावेशयन्निव ॥ ज्वलन्निव समुत्तस्थौ यः स भोक्तेति गम्यताम् ॥१६॥ विज्ञानमंतःकरणं तस्मिन्नात्मोपलभ्यते ॥

राहुश्चंद्रे यथा तद्वद्विज्ञानमयता ततः ॥१७॥ स्वाभासवदविद्यो-
त्थबुद्ध्यादिव्याप्तिविभ्रमात् ॥ तदात्मत्वाभिमानी सन्नहमित्युपल-
भ्यते ॥१८॥ यद्वोपलब्धिमात्रोऽपि विज्ञानाध्यस्तकर्तृताम् ॥ प्राप्योे-
पलब्धा स्यात्तेन विज्ञानमय उच्यते ॥१९॥ स्फटिको रक्ततां प्राप्य
जपाकुसुमकल्पिताम् ॥ पद्मरागायते तद्वदुपलब्धृत्वमात्मनः ॥२०॥
यद्वोपलभ्यो देहादेर्विज्ञानेन विवेचितः ॥ स्याद्विज्ञानमयस्तेन पुरुषः
परिपूरणात् ॥२१॥ अशेषान्कल्पितानेष विज्ञानादीननात्मनः ॥
आत्मा पूरयति प्रत्यक् सर्पादीन् रशना यथा ॥२२॥ यो विज्ञा-
नमयस्तस्य द्वैतधीः स्वप्नजाग्रतोः ॥ अस्ति सुप्तौ तु सा नास्ति
स्वभावोऽस्यात्र को भवेत् ॥२३॥ तस्य स्वभावं निर्णेतुं सुप्तौ क्वाभू-
दयं पुनः ॥ कुत आयादिमं देहमित्येतदिह चिंत्यते ॥२४॥ बुद्ध्या-
वक्षेपु चात्माऽयं चिद्रूपः प्रतिबिंबति ॥ तादृग्बुद्धींद्रियोपाधिर्जा-
गर्त्यात्मेति भण्यते ॥२५॥ कर्मक्षये बुद्धिरक्षैः सहाज्ञाने विली-
यते ॥ चैतन्यप्रतिबिंबाश्च लीयंते स्वाश्रयानतु ॥२६॥ तदेंद्रियाणां
विज्ञानं धीविज्ञानेन संयुतम् ॥ विज्ञानमय आदत्ते इति श्रुत्योपव-
र्ण्यते ॥२७॥ धीविज्ञानोपसंहारे विज्ञानमयताक्षतौ ॥ निर्विकारा-
त्मचैतन्यं केवलं परिशिष्यते ॥२८॥ एतदेव विवक्षित्वा प्रतिपाद-
यति श्रुतिः ॥ य एषोंऽतर्हृदाकाशस्तस्मिञ्छेते इतीदृशी ॥ २९ ॥
बुद्धिर्हृदयशब्देन हृन्निष्ठत्वाद्विवक्ष्यते ॥ आसमंतात्काशतेऽयमित्या-
काशोऽत्र चिद्वपुः ॥३०॥ बुद्धेरंतः प्रतीचोऽन्यो नार्थः संभाव्यते
यतः ॥ तस्मादाकाशशब्देन प्रत्यगात्मेह गृह्यते ॥३१॥ प्राणादीनां
यतो जन्म वक्ष्यते प्रत्यगात्मनः ॥ तस्मादाकाशशब्देन ब्रह्मैवात्रा-
भिधीयते ॥३२॥ अधिष्ठानत्वमंतस्त्वमपरिच्छिन्नवस्तुनः ॥ अंत-

बहिर्विभागोऽयं न मुख्य उपपद्यते ॥३३॥ पराक् प्रमेयभूमिभ्यो मनसि व्युत्थिते सति ॥ अनन्यबोधप्रात्यक्ष्याद्य एष इह भण्यते ॥३४॥ स्वतोऽवगमरूपेऽस्मिन्कूटस्थे निर्द्वयात्मनि ॥ कार्त्स्न्येनावस्थितिर्भोक्तुः शेत इत्यभिधीयते ॥३५॥ घटभंगे घटाकाशो महाकाशान्न भिद्यते ॥ विज्ञानलोपे विज्ञानमयस्यैवं परात्मता ॥३६॥ देहाद्यध्यक्षतां हित्वा सुप्तौ स्वात्मनि वर्तते ॥ इत्येतत्साध्यते श्रुत्या समाख्यायाश्च युक्तितः ॥३७॥ सुप्तस्य स्वपितीत्येषा समाख्या सर्वसंमता ॥ निरुक्तिमाहुश्छंदोगाः स्वमपीत इतीदृशीम् ॥ ३८ ॥ अतः समाख्यया सुप्तौ स्वाभाविक्यात्मनि स्थितिः ॥ युक्तिश्चोपाधिसंहारः संसारित्वनिवृत्तये ॥३९॥ वागाद्युपाधिसंबंधात्संसारित्वमिवेक्ष्यते ॥ ते तूपसंहृताः सर्वे ततोऽसंसारितात्मनः ॥४०॥ सर्वेंद्रियवियोगेऽपि सुखिदुःखित्वमात्मनः ॥ स्वप्ने दृष्टमतः संग आत्मनस्तात्विको भवेत् ॥४१॥ मैवं मृषात्वात्स्वप्नस्य मनोमात्रविजृंभणात् ॥ बाह्येंद्रियविलोपेऽपि न मनो लिप्यते तदा ॥४२॥ महाराजादयस्तस्य स्वप्नानुभवगोचराः ॥ न वास्तवा इति ज्ञेयाः शयानेभ्यः पृथक्त्वतः ॥४३॥ दृश्यं मिथ्याऽस्तु तद्द्रष्टुर्द्रष्टृता वास्तवी ततः ॥ दृश्यसापेक्ष्यतेत्येषा शंकात्र विनिवार्यते ॥ ४४ ॥ न किंचन यदा वेद तदा सुप्त इतीरणात् ॥ आत्मनो ज्ञानकर्तृत्वं सुप्तौ नास्तीति गम्यते ॥४५॥ सुप्तौ केन क्रमेणायमुपाधिः प्रविलीयते ॥ तत्क्रमस्यावबोधाय हृदयादि विविच्यते ॥४६॥ आनाभितस्तथा कंठाद्धृदयं मध्यतः स्थितम् ॥ सनालं पद्मकोशाभं पंचच्छिद्रमधोमुखम् ॥४७॥ कदंबकुसुमोद्भूतकेसरा इव सर्वतः ॥ प्रसृता हृदयान्नाड्यो बह्वन्नरसपूरिताः ॥४८॥ निर्गत्य हृदयाद्बुद्धिस्तासु स्वप्नं प्रपश्यति ॥

ताभिर्देहाद्वहिर्गत्वा जागर्तीत्यभिधीयते ॥४९॥ पुनः प्रत्यवसृत्यैषा पुरीतद्वेष्टिते हृदि ॥ प्रविश्य लीयते देहं व्याप्य सामान्यवृत्तितः ॥५०॥ सर्वसंसारदुःखानामत्यंतोपरमात्तदा ॥ आनंदस्य परा निष्ठा दृष्टांतैः सोपमीयते ॥५१॥ इंद्रियस्याप्ररूढत्वात्स्वेष्टप्राप्तेर्विवेकतः ॥ नीरागाणां बालराजब्राह्मणानां क्रमात्सुखम् ॥५२॥ दुःखं रागद्वेषजन्यं तदभावे सुखं स्वतः ॥ इति व्याप्तिगृहीत्यर्थं बहुदृष्टांतवर्णनम् ॥५३॥ अद्वयानंदरूपत्वमित्थं सुप्तौ प्रदर्शितम् ॥ एतावता स्वभावोऽस्य निर्णीतः प्रत्यगात्मनः ॥५४॥ काभूदेष इति प्रश्नं निर्णीय कुत आगतः ॥ इति प्रश्नं विनिर्णेतुमूर्णनाभ्यादिका श्रुतिः ॥५५॥ यः सुप्तौ निश्चितः स्वात्मा तस्य ब्रह्मत्वसिद्धये ॥ जगत्सृष्टिर्वर्ण्यतेऽस्मात्सृष्टौ दृष्टांत उच्यते ॥५६॥ अचेतनो यथा तंतुरूर्णनाभेः सचेतनात् ॥ जातश्चिदात्मनस्तद्वत्प्राणलोकाद्यचेतनम् ॥५७॥ विस्फुलिंगा यथा चाग्नेर्जायंतेऽग्निस्वभावतः ॥ तथा सुतात्मनो जीवा विज्ञानमयनामकाः ॥५८॥ स्वरूपतो जन्मतश्च प्राणादिभ्रांतिकल्पिताः ॥ जीवस्य कल्पितं जन्म स्वरूपं तु न कल्पितम् ॥५९॥ उद्भूतिस्थितिनाशाः स्युर्जगतोऽस्य प्रतिक्षणम् ॥ अविद्यामात्रहेतुत्वान्नामीषां विद्यते क्रमः ॥६०॥ यस्मादविद्ययैवात्मा प्राणक्षेत्रज्ञरूपभाक् ॥ स्वतोऽतः स परं ब्रह्म तस्योपनिषदुच्यते ॥६१॥ यद्गुह्यं ब्रह्मणो नाम बोधायोपासनाय वा ॥ तत्स्यादुपनिषच्छब्दवाच्यं तच्चात्र बुध्यते ॥६२॥ सत्यस्य सत्यमित्येतन्नाम ब्रह्माऽवबोधकम् ॥ प्राणा आपाततः[1] सत्याः सत्यं ब्रह्मैव वस्तुतः ॥६३॥ असत्यो देह उदित एकजन्मन्युपक्षयात् ॥ सत्याः

---

१ अविचारतः ।

प्राणा लिंगरूपा आमोक्षमनपक्षयात् ॥६४॥ मोक्षेऽप्यक्षीण आत्मा तु सत्यसत्य उदाहृतः ॥ सत्यस्य सत्यं प्रोवाच ब्रह्म बालकये नृपः ॥६५॥ प्राणा वै सत्यमित्युक्तं यत्सत्यं व्यावहारिकम् ॥ बालाक्यभिमतं तत्तु द्वितीयब्राह्मणे स्फुटम् ॥६६॥ शिशुवद्विषयासंगरहितः प्राण इष्यते ॥ वागादीनामिव यतो विषयोऽस्य न दृश्यते ॥६७॥ शरीरमस्याधानं स्यादेहमापादमस्तकम् ॥ सामान्यवृत्त्या संव्याप्य चेष्टयत्यनिशं[1] यतः ॥६८॥ प्रत्याधानं[2] शिरो ज्ञेयं प्रतिच्छिद्रं व्यवस्थितः ॥ प्रसारयति नेत्रादीन्प्राणो मूर्ध्नि व्यवस्थितः ॥६९॥ प्राणस्य बंधनस्तंभः शरीरबलमिष्यते ॥ दौर्बल्ये सति देहस्य प्राणोत्क्रांतिर्हि दृश्यते ॥७०॥ बंधनायास्य दामान्नं वत्सबंधनरज्जुवत् ॥ अन्ने त्रिधा विभक्तेऽस्मिन्भागाभ्यां बद्ध्यते स्वयम् ॥७१॥ स्थूलो भागः पुरीषं स्यान्मध्यमो देहपोषकः ॥ प्राणं तर्पयते सूक्ष्म इति बद्धं वपुर्द्वयम् ॥७२॥ एवं विवेचितं प्राणं य उपास्ते रुणद्धि सः ॥ भ्रातृव्यान्द्विषतः सप्त मूर्ध्नि छिद्रव्यवस्थितान् ॥७३॥ भ्रातृव्याः स्युः सहोत्पत्तेः शब्दाद्याः संगवृत्तयः ॥ द्विषंति च मुमुक्षुं ताः प्रत्यग्दृष्ट्यापहारतः ॥७४॥ सेवंतेऽक्षिस्थितं प्राणं सप्त[3] रुद्रादिदेवताः ॥ अक्षीणा इत्युपास्ते यः सोऽन्नमक्षयमश्नुते ॥७५॥ कर्णादिसप्तच्छिद्रेषु गौतमाद्यृषिनामकाः ॥ स्थिताः प्राणा इति ध्यायेद्वाचं च ब्रह्मवादिनीम् ॥७६॥ हिरण्यगर्भरूपेण सर्वभुक् स्यादुपासकः ॥ इति गार्ग्यमतं ब्रह्म ब्राह्मणेऽस्मिन्प्रपंचितम् ॥ ७७ ॥ गार्ग्योक्तं ब्रह्म विस्तृत्य तन्निरासाय सांप्रतम् ॥ तृतीयब्राह्मणे प्राह राज्ञोक्तं ब्रह्म विस्तृतम् ॥७८॥

---

१ अहर्निशम् । २ प्रदेशविशेषेषु प्रति प्रति आधीयतेऽस्मिन्निति प्रत्याधानम् । ३ उत्तरदक्षिणकर्णौ गौतमभारद्वाजौ विपर्ययेण एव वा तथा चक्षुषी विश्वामित्रजमदग्नी वसिष्ठकश्यपौ नासिके वागेवात्रिः ।

प्रथमब्राह्मणे राजा ब्रह्म यद्यप्यशेषतः ॥ उवाचाथापि सत्यस्य सत्यता नैव विस्तृता ॥७९॥ सत्यसत्यत्वविस्तारमुखेन प्रतिपाद्यते ॥ निष्प्रपंचब्रह्मतत्त्वं तृतीयब्राह्मणे स्फुटम् ॥८०॥ द्वे एव ब्रह्मणो रूपे प्रपंचत्वमुपागते ॥ मूर्तामूर्तात्मके याभ्यामरूपं ब्रह्म रूप्यते॥८१॥ मूर्तामूर्त प्रपंचश्च वासना चेति वा द्वयम् ॥ सवासनमिदं रूपमनिदं चेति वा द्वयम् ॥ ८२ ॥ संनिवेशो नेत्रदृशोर्यस्य तन्मूर्तमुच्यते ॥ क्षित्यंब्वग्नित्रयं मूर्तममूर्तमितरद्द्वयम् ॥ ८३ ॥ मूर्तं मर्त्यं शीघ्रनाशात्परिच्छेदात्स्थितं तथा ॥ प्रत्यक्षत्वात्सदित्युक्तममूर्तं तु विपर्ययः ॥८४॥ तन्नश्यति विलंबेनेत्यमृतं व्याप्तिमत्वतः ॥ यत्परोक्षमतस्तत्स्यान्मूर्तामूर्तात्मकं जगत् ॥ ८५ ॥ अध्यात्ममधिदैवं च द्विधा सत्यं व्यवस्थितम् ॥ प्रसिद्धमुभयत्रापि स्थूलसूक्ष्मवपुर्द्वयम् ॥८६॥ स्थूलसारतयाज्ञेये चक्षुरादित्यमंडले ॥ मूर्तमर्त्यपरिच्छिन्नप्रत्यक्षत्वविशेषिते ॥८७॥ अमूर्तामृतसंव्याप्तपरोक्षत्वैस्तु संयुतम् ॥ उभयत्रस्थितं लिंगममूर्तरस उच्यते ॥८८॥ सारासारयुते रूपे मूर्तामूर्ते उदीरिते ॥ अरूपं ब्रह्मरूपाभ्यां व्यवहारे निरूप्यते ॥८९॥ मूर्तामूर्ते ब्रह्मरूपे इति पक्षो निरूपितः ॥ प्रपंचतद्वासने द्वे रूपे इत्येव वर्ण्यते ॥९०॥ प्रपंचो नाम पूर्वोक्तं मूर्तामूर्तद्वयं भवेत् ॥ सद्वासना विचित्राः स्युरनंता लिंगमाश्रिताः ॥९१॥ अनेकवासनाचित्रं तल्लिंगं पटभित्तिवत् ॥ मायेंद्रजालसदृशं व्यामोहास्पदमात्मनः ॥९२॥ एतावन्मात्र आत्मेति तत्र भ्रांता निरागमाः ॥ बौद्धकाणादसांख्याद्यास्तर्कमात्रोपजीविनः ॥९३॥ एकैकां वासनां तत्र प्रतिक्षणविनश्वरीम् ॥ आहुः क्षणिकमात्मानं बौद्धा विज्ञानवादिनः ॥९४॥ आत्मनो द्रव्यभूतस्य गुणा बुद्ध्यादयो नव ॥ वासनात्वेन

वेदोक्ता इति वैशेषिकादयः ॥९५॥ त्रिगुणं यत्प्रधानं तत्पुरुषार्थेन हेतुना ॥ प्रवर्तते वासनात्वक्लृप्तिस्तत्रेति कापिलाः ॥९६॥ अनंतकल्पोपचया अनंता एव वासनाः ॥ उदाहरणमात्रं तु दृष्टांतैरिह वर्ण्यते ॥९७॥ हारिद्रं वसनं यद्वत् संसर्गात्पीततां व्रजेत् ॥ तद्वन्नार्यादिसंसर्गाल्लिंगं रागादिमद्भवेत् ॥ ९८ ॥ ईषत्पांडुश्च परुषः[1] स्यात्स्वच्छः श्वेतकंबलः ॥ तथेषच्छ्रद्धया युक्तं स्वतो रोषादिभागपि ॥९९॥ इंद्रगोपोऽतिरक्तः स्यात्स्वत एव तथा मनः ॥ विविक्तदेशस्थस्यापि विषयप्रवणं क्वचित् ॥१००॥ अग्नेरर्चिर्यथा[2] भास्वद्दहत्यपि तथा क्वचित् ॥ वेदशास्त्रविदप्यन्यान्बाधेतेर्ष्याद्युपद्रवैः॥१॥ सितांभोजं[3] यथा सौम्यं सुगंधि मृदु च स्वतः ॥ जन्मनैव तथा चित्तं युक्तं शमदमादिभिः ॥२॥ तीव्रविद्युद्यथाऽत्यंतं घनध्वांतापनोदकृत् ॥ तथा हिरण्यगर्भस्य सर्वज्ञा वासना भवेत् ॥३॥ तामुपासीन आप्नोति श्रियमत्यंतमूर्जिताम् ॥ रजःसत्वतमोयोगाद्वासनानां विचित्रता ॥४॥ प्रपंचवासने ब्रह्मरूपे इत्येतदीरितम् ॥ तथेदमनिदंरूपे इति पक्षोऽधुनोच्यते ॥५॥ सवासनं जगत्सर्वं तत्रेदंरूपमीरितम् ॥ सच्च त्यच्चेति सत्यं तत्प्रोच्यते पांचभौतिकम् ॥ ६ ॥ सत्यस्य सत्यमनिदं वक्तव्यं शिष्यते ततः ॥ आदेशोऽनंतरं तस्य क्रियतेऽनन्यमानिनः[4] ॥७॥ आदेशो नेति[5] नेतीति ब्रह्मतत्त्वावबोधकः ॥ यथाऽयमुपपद्येत तथा सम्यङ्निरूप्यते ॥८॥ इतिशब्देन चिह्नास्यमनूद्य प्रतिषिध्यते ॥ नकारेण द्विरुक्तिस्तु वीप्सा कृत्स्ननिषिद्धये ॥ ९ ॥ मूर्तं वा यदि वाऽमूर्तमज्ञानं वासनाऽथवा ॥ अध्या-

१ कठोरः । २ शिखा । ३ शुभ्रं कमलम् । ४ मानापेक्षारहितस्य ।
५ अथात आदेशो नेति नेति नह्येतस्मादिति नेत्यन्यत्परमस्त्यथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेव सत्यम् ।

त्ममधिदैवं वा तत्सर्वं प्रतिषिध्यते ॥११०॥ अथवाऽत्रेति शब्दौ द्वौ जीवेशोपाधिवाचिनौ ॥ नकाराभ्यामुपाधी द्वौ निषिध्य ब्रह्म लक्ष्यते ॥१११॥ यथा मात्रादिसत्तेयं प्रत्यक् संविद्विसाक्षिका ॥ प्रमात्रादेरभावोऽपि तथाऽतस्तेन लक्ष्यते ॥११२॥ अतिरोहितसंवित्को दृष्टिमात्रात्मकत्वतः ॥ विनैव वाचकं शब्दं बोध्यो लक्षणयाऽप्यतः ॥११३॥ अनन्यानुभवेनैव भावाभावात्मभूमिषु ॥ प्रत्यक्कूटस्थमात्मानं पश्यन्नास्ते फलात्मना ॥११४॥ अतो मंत्रादिसंभेदो यत्र यत्र निवर्तते ॥ तत्र तत्रैककः प्रत्यक् स्वमहिम्नैव सिद्ध्यति ॥११५॥ एतद्वस्तु स्वतःसिद्धं प्रमात्राद्यनपेक्षतः ॥ सर्वस्यैव ततः सिद्धेः कथं सिद्ध्येत्तदन्यतः ॥११६॥ तदित्थं नेति नेतीति वाक्यं ब्रह्मात्मबोधकम् ॥ जीवेशोपाधिनिह्नुत्या लक्ष्याखंडावसानतः ॥११७॥ इत्येवमनिर्दूरूपं ब्रह्मणः प्रतिपादितम् ॥ निर्नाम्नस्तस्य नामैतत्सत्यं सत्यमिति श्रुतम् ॥११८॥ सच्च त्यच्चेति सत्याख्याः प्राणास्ते ब्रह्मणात्मना ॥ आत्मवंतस्ततो ब्रह्म सत्यं सत्यमितीरितम् ॥११९॥ अजातशत्रुर्यां विद्यां ब्राह्मणैस्त्रिभिरुक्तवान् ॥ तद्व्याख्यानेन संतुष्याद्विद्यातीर्थमहेश्वरः ॥ १२० ॥ इति श्रीविद्यारण्यविरचिते अनुभूतिप्रकाशे अजातशत्रुविद्याप्रकाशो नाम चतुर्दशोऽध्यायः ॥१४॥

मैत्रेय्यै याज्ञवल्क्यो यां चतुर्थब्राह्मणेऽब्रवीत् ॥ ससाधनां ब्रह्मविद्यां विस्पष्टं व्याकरोति ताम् ॥१॥ चित्तस्य कर्महेतुत्वात्तत्त्यागो ज्ञानसाधनम् ॥ इति दर्शयितुं प्राह श्रुतिराख्यायिकां शुभाम् ॥२॥ एषणात्रयसंन्यासो वित्तत्यागेन लक्ष्यते ॥ ज्ञानस्य हेतुः संन्यास इति शास्त्रेषु डिंडिमः ॥३॥ द्विविधः कर्मसंन्यासः फलसाधनभेदतः ॥ फलाय ज्ञानिनस्त्यागो जिज्ञासोर्ज्ञानसिद्धये ॥४॥ ज्ञानि-

त्वाद्याज्ञवल्क्योऽयं जीवन्मुक्तिफलेच्छया ॥ चित्तविक्षेपबाहुल्यं गार्हस्थ्यं त्यक्तुमिच्छति ॥५॥ निदिध्यासस्वेति शब्दात्सर्वत्यागफलं जगौ ॥ न ह्यन्यचिंतामत्यक्त्वा निदिध्यासितुमर्हति ॥६॥ निरंतरं विचारोऽयः श्रुतार्थस्य गुरोर्मुखात् ॥ तन्निदिध्यासनं प्रोक्तं तच्चैकाग्र्येण लक्ष्यते ॥ ७ ॥ अनात्मन्यरुचिश्चित्ते रुचिश्चात्मनि चेद्भवेत् ॥ पुण्यपुंजेन शुद्धं तच्चित्तमैकाग्र्यमर्हति ॥८॥ शुध्यंकुरितमैकाग्र्यं विवेकेनाभिवर्धयेत् ॥ प्रियाप्रियविवेकोऽतो मैत्रेय्या उपदिश्यते ॥९॥ पतिजायादिभोगेषु भोक्तर्यात्मनि चेक्ष्यते ॥ प्रीतिस्तत्र क मुख्येयं कुत्रामुख्येति चिंत्यताम् ॥१०॥ सदा भूयासमेवाहं मानभूवं कदाचन ॥ इत्यनौपाधिकी प्रीतिः प्राणिनामात्मनीक्ष्यते ॥११॥ स्वसंबंधोपाधिनैव भोग्ये प्रीतिर्न तु स्वतः ॥ अन्यथा वैरिभोग्येऽपि भोग्यत्वात्प्रीतिरापतेत् ॥१२॥ अविचारेण पुत्रादौ या प्रीतिस्तां विचारतः ॥ आत्मन्येवोपसंहृत्य चित्तैकाग्र्यं विवर्धयेत् ॥१३॥ ऐकाग्र्यमचलं कृत्वा निदिध्यासनकारणम् ॥ आत्मा द्रष्टव्य[1] इत्येतत्सूत्रं व्याख्यातुमाददे ॥१४॥ आहात्मशब्दः प्रत्यंचं तथा लोकेऽनुभूतितः ॥ अनेनात्रात्मशब्देन प्रमेयं निर्दिदिक्षितम् ॥१५॥ द्रष्टव्य इति निर्दिष्टा प्रमितिर्दर्शि धातुना ॥ अज्ञातज्ञापनं तव्यप्रत्ययेनाभिधीयते ॥ १६ ॥ अज्ञात आत्मा वेदांतजन्यज्ञानेन मीयते ॥ इत्येष एव वाक्यार्थो नाप्रवृत्तप्रवर्तनम् ॥१७॥ नन्वहंप्रत्ययेनात्मा वेदांतश्रवणात्पुरा ॥ विज्ञात इति चेन्मैवं सार्वात्म्यानवबोधनात् ॥१८॥ लिंगदेहपरिच्छिन्नरूपग्राहिण्यहंमतिः ॥ सार्वा-

१ आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्यो मैत्रेय्यात्मनि वा अरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम् ।

त्म्यमात्मनस्तत्त्वं तदज्ञातमहंधिया ॥१९॥ सर्वासूपनिषत्स्वेतत्सार्वात्म्यं प्रतिपाद्यते ॥ कार्यज्ञेयसमाप्तिः स्यात्सार्वात्म्यस्यावबोधतः ॥२०॥ आत्मा द्रष्टव्य इत्युक्त्या तत्त्वधीरुपदर्शिता ॥ श्रोतव्य इत्यादिना तु विचार उपदर्श्यते ॥२१॥ श्रुत्यर्थाविष्कृतेर्हेतुः शब्दशक्तिविवेककृत् ॥ श्रुतिर्लिंगादिको न्यायः प्रोक्तः श्रोतव्य इत्यतः॥२२॥ अर्थासंभावनोच्छेदी तर्को मननमीरितम् ॥ वेदशास्त्राविरोध्यत्र तर्को ग्राह्यो न चेतरः ॥२३॥ अपरायत्तबोधोऽत्र निदिध्यासनमुच्यते ॥ ध्यानाशंकानिवृत्त्यर्थं विज्ञानेनेत्युदीरणात् ॥२४॥ द्रष्टव्य इति विज्ञानमुद्दिश्य श्रवणं तथा ॥ मननं च विधायाथ विज्ञानमवधिं जगौ ॥२५॥ नन्वनात्मा न विज्ञात आत्मदर्शनमात्रतः ॥ ततोऽकृत्स्नत्वदोषश्चेन्मैवं सर्वस्य वेदनात् ॥२६॥ आत्मनो दर्शनेनेदं दृष्टं स्यादखिलं जगत् ॥ प्रत्यङ्मात्रैकयाथात्म्यात्कार्यकारणवस्तुनः ॥२७॥ कार्यात्मा कारणात्मा च द्वावात्मानौ परात्मनः ॥ प्रत्यग्याथात्म्यमोहोत्थौ मोहे नष्टे विनश्यतः ॥२८॥ मोहतत्कार्ययोर्बाधे प्रत्यक् सर्वमितीर्यते ॥ अतः प्रतीचि विज्ञाते सुलभं सर्ववेदनम् ॥२९॥ तत्रैवं सति यो मूढः समस्तव्यस्तरूपताम् ॥ ज्ञातव्यां मुनते तां तु वेद एव निषेधति ॥३०॥ यो विप्रजातिश्चैतन्यादन्यद्वस्त्विति मन्यते ॥ कैवल्यात्तं पराकुर्याद्विप्रजातिः पराङ्मुखम् ॥३१॥ ब्राह्मणोऽहमिति भ्रांत्या बृहस्पतिसंवादिषु[1] ॥ प्रवृत्तो लभते जन्मेत्येषैवास्य पराक्रिया ॥३२॥ विप्रत्ववत्क्षत्रलोकदेवभूतादिकं जगत् ॥ स्वस्माद्भेदेन पश्यंतं क्लेशयेदपराधिनम् ॥ ३३ ॥ यदस्ति तन्न जानाति यन्नेहास्ति तदीक्षते ॥ इत्येवमपराधोऽस्य

१ यज्ञादिषु ।

विद्यते भेददर्शिनः ॥३४॥ योऽन्यथा संतमात्मानमन्यथा प्रतिपादयेत् ॥ किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥ ३५ ॥ [1]अपोहितत्वाज्जात्यादिदर्शनस्येह किं पुनः ॥ द्रष्टव्यमित्यतो वक्ति सर्वाखंडत्वदर्शनम् ॥३६॥ प्रत्यक्त्वेन य आभाति प्रत्यग्बुद्धिप्रमाणकः ॥ तावन्मात्रैकयाथात्म्यमुक्तजात्यादि दृश्यताम् ॥३७॥ एवं श्रोतव्य आत्माऽयं समाप्तः श्रवणे विधिः ॥ कथं मंतव्य इत्यत्र दुंदुभ्यादिनिदर्शनम् ॥३८॥ स्थितौ जनौ लयेऽप्येतज्जगदात्मातिरेकतः ॥ नास्तीत्येतत्क्रमेणात्र दृष्टांतैः प्रतिपाद्यते ॥३९॥ यथा दुंदुभिशब्दत्वसामान्याद्युत्थितान्पृथक् ॥ नादातुं शक्यात्कश्चिद्विशेषानसिकोशवत् ॥ ४० ॥ तद्वदात्मातिरेकेण नात्मीयोऽर्थो मनागपि॥ यतः समीक्षितुं शक्यस्तेनासौ रज्जुसर्पवत् ॥४१॥ सामान्यं तद्विशेषश्च तद्विशेषा इति त्रयः ॥ दुंदुभिस्तस्य चाघातः शब्दश्चेत्येभिरीरिताः ॥४२॥ सामान्यं दौंदुभः शब्दो वीरादिरससंयुतः ॥ विशेषस्तद्विशेषास्तु नीचोच्चादिविभेदिनः ॥ ४३ ॥ नीचादिभेदिनः शब्दा वीरादिरससंयुते ॥ अंतर्भवंति सोऽप्यंतर्भूतस्याद्दौंदुभध्वनौ ॥४४॥ एवं शंखेऽपि वीणायां योजयित्वा पुनः पुनः ॥ शंखदुंदुभिवीणाख्यध्वनीनन्यत्र योजयेत् ॥४५॥ ध्वनित्रयं महाशब्दसामान्येंऽतर्भवेदिति ॥ विवक्षया शंखभेरीवीणास्तिस्र उदीरिताः ॥४६॥ यथा विशेषसामान्यतत्सामान्यपरंपरा ॥ शब्दे स्थिता तथा सर्वमुपलब्धिस्थमीक्षते ॥ ४७ ॥ उपलब्धोऽस्ति सन्कुंभो लंबोष्ठो देशकालवान् ॥ पूर्वपूर्वातिरेकेण नोत्तरोऽर्थोऽनुभूयते ॥ ४८ ॥ एवं चिदन्वयात्सर्वं चिदध्यस्तं तथा सति ॥ चिदात्मैवास्य सर्वस्य

---

१ बाधितत्वात् ।

तात्त्विकं रूपमीक्ष्यताम् ॥४९॥ स्थितिकाले यथैकात्म्यं शक्यते ज्ञातुमंजसा ॥ यथोक्तन्यायतस्तद्वदुत्पत्तावपि शक्यते ॥ ५० ॥ धूमार्चिर्विस्फुलिंगादिविभागजननात्पुरा ॥ अग्निरेव न धूमाद्यास्तथैकात्म्यं जनैः पुरा ॥ ५१ ॥ स्वार्थसाधनयत्नादीननपेक्ष्य यथा सृजेत् ॥ धूमादीन्हुतभुक्तद्वदृ्[1]गादीन्प्रत्यगीश्वरः ॥५२॥ नार्थं बुध्वा वाक्यसृष्टिः कालिदासादिवाक्यवत् ॥ किंतु श्वास इवायत्नात्स्यादतोऽपौरुषेयता ॥५३॥ मंत्राश्चतुर्विधा ज्ञेया ऋग्वेदादिगिरोदिताः ॥ ब्राह्मणं चेतिहासादिरूपमष्टविधं भवेत् ॥ ५४ ॥ प्रसिद्धाश्चेतिहासाद्या ऋग्वेदाद्युपबृंहकाः ॥ निखिलापि जगत्सृष्टिः शब्दसृष्ट्योपलक्ष्यते ॥५५॥ प्रज्ञानव्यतिरेकेण यथैव स्थितिसर्गयोः ॥ वस्त्वंतरं न संभाव्यं प्रलयेऽपि तथोच्यते ॥ ५६ ॥ स्वाभाविकात्यंतिकौ द्वौ प्रलयौ जगतस्तयोः ॥ स्वाभाविकः स्यात्कल्पांते बोधादित्यंतिको मतः ॥ ५७ ॥ समुद्रखिल्यौ दृष्टांतौ क्रमात्प्रलययोर्मतौ ॥ लीयतेऽब्धौ जलं यद्वत्तथा ब्रह्मणि तज्जगत् ॥ ५८ ॥ साक्षाद्वाथ प्रनाड्या वा जलमब्धौ प्रलीयते ॥ साक्षाद्गंगादिका नद्यस्तत्प्रनाड्या जलांतरम् ॥५९॥ तथैव कारणं वस्तु साक्षाद्ब्रह्मणि लीयते ॥ कार्यं तु कारणद्वारेत्येतदत्र विवक्षितम् ॥६०॥ विषयप्रलयेनाक्षप्रलयस्योदितत्वतः ॥ लयः सर्वस्य जगतो ब्रह्मणीत्यत्र सुस्थितम् ॥ ६१ ॥ एवं मंतव्य आत्मायमर्थासंभवनुत्तये ॥ दुंदुभ्याद्युक्तदृष्टांतन्यायमार्गेण यत्नतः ॥ ६२ ॥ अपरा[2]यत्तबोधाख्यनिदिध्यासनसिद्धये ॥ आत्यंतिकलयं वक्तुं खिल्यदृष्टांत उच्यते ॥६३॥ सामुद्रमंभो लव-

---

१ अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वांगिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यन्यव्याख्यानान्यस्यैवैतानि निःश्वसितानि । २ अपराधीनबोधसिद्धये ।

णक्षेत्रे भानुविपाकतः ॥ लवणोपलतां प्राप्य सैंधवः खिल्य उच्यते ॥६४॥ स खिल्य उदधौ क्षिप्तस्तापशांतौ विलीयते॥अशक्यः पुनरुद्धर्तुं खिल्यरूपेण पूर्ववत् ॥६५॥ खिल्योद्धृत्यै नीरमब्धावाददीत यतो यतः ॥ तत्र तत्र रसो लभ्यः खिल्यस्त्वेष न कुत्रचित् ॥ ६६ ॥ सामुद्रस्यांभसस्तापात्खिल्यतैवं परात्मनः ॥ आब्रह्मस्तंबपर्यंतं जीवता स्यादविद्यया ॥६७॥ महद्भूत[1]मनंतं स्यादपारं चिद्घनं स्वतः ॥ देहेंद्रियाख्यभूतेभ्यो जीवत्वेन समुत्थितम्॥६८॥महत्त्वं सर्वगत्वं स्याद्भूतत्वं नित्यसिद्धता ॥ अनंतापारशब्दाभ्यां व्याप्तिनित्यत्वसाधनम्॥६९॥ कार्यकारणराहित्यं यदि वेहोपलक्ष्यताम् ॥ अनंतत्वमकार्यत्वमपारत्वमहेतुता ॥७०॥ विज्ञानघन एवेति जात्यंतरनिषेधनम् ॥ तदिदं वस्तुनस्तत्त्वं मायिकी सा समुत्थितिः ॥ ७१ ॥ अब्धिस्थानीयमैकात्म्यं जलस्थानं तु साक्षिचित् ॥ क्षेत्रस्थानं शरीरादि तापस्थानं तु विभ्रमः ॥७२॥ खिल्यस्थानं चिदाभासो योगात्कर्तृत्वभोक्तृते ॥ द्रष्टा श्रोता द्विजो गौरो धनी गोमान्भवेत्ततः ॥७३॥ प्रत्यगात्मैव सद्ब्रह्म परोक्षमभवत्तदा ॥ ब्रह्मैव सन्नयं चात्मा संसारित्वमवाप्तवान् ॥ ७४ ॥ इत्येवं परवस्त्वेव पंचभूताख्यमायया ॥ जीवत्वेन समुत्थाय स्वतः शास्त्रेण बुध्यते ॥ ७५ ॥ सर्वमात्मैव सम्यग्धीजन्मनैवाखिले भ्रमे ॥ नष्टे नश्यति जीवत्वं जले प्रक्षिप्तखिल्यवत्॥७६॥ क्षेत्रज्ञेश्वरभेदेन पुनः संज्ञा न विद्यते ॥ तद्धेतोस्तमसो ध्वंसात्खिल्यानुद्धरणं यथा ॥७७॥ दृष्टिमात्रात्मयाथात्म्यात्कार्यकारणवस्तुनः॥ न ज्ञातं किंचिदप्यस्ति नानपास्तं तथा तमः ॥७८॥ आत्यंतिकोऽयं

---

१ महद्भूतमनंतमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीति ।

प्रलयः पुनर्जन्मविवर्जनात्॥स्वाभाविके लये शक्तिशेषादस्ति पुनर्जनिः ॥७९॥ विज्ञानैकघनस्यास्य संज्ञा नास्तीति यद्वचः ॥ तद्व्याहतिर्न शक्यात्र तयोर्विषयभेदतः ॥ ८० ॥ विज्ञानैकघनोक्त्यास्य कृत्स्नैकात्म्यं पुरोदितम् ॥ संज्ञा नास्तीति चाविद्याजन्या बुद्धिर्निषिध्यते ॥ ८१ ॥ कार्यकारणताशेषि स्वतःसिद्धमनन्यगम् ॥ यद्वस्तु तदलं स्वात्मसंवित्त्यै निरपेक्षतः ॥८२॥ ऐकात्म्यं यदविज्ञातं तद्वैतमिव विभ्रमात् ॥ स्याद्यत्र तत्र पुंसोऽसौ कर्तृकर्मादिभेदधीः ॥८३॥ ननु द्वैतमिवेत्येतदुपमानं कथं तव ॥ उपमेयद्वैतवस्तुराहित्यादिति चेच्छृणु ॥८४॥ रामरावणयोर्युद्धं रामरावणयोरिव ॥ इत्यादावुपमा दृष्टा स्वस्य स्वेन तथेष्यताम् ॥८५॥ यद्वल्लोके चंद्रभेदः कल्पितत्वेन संमतः ॥ जगद्भेदोपमा सा स्यान्मिथ्यात्वं तेन सिद्ध्यति ॥८६॥ समस्तव्यस्तरूपत्वं यो वक्तीहात्मनः श्रुतेः ॥ तत्पक्षस्य निषेधाय द्वैतमिथ्यात्ववर्णनम् ॥८७॥ ज्ञातृज्ञानज्ञेयरूपं प्राप्य स्वप्ने यथा मृषा ॥ एको व्यवहरत्येवमज्ञो व्यवहरेन्मृषा ॥८८॥ यस्यामविद्यावस्थायां[1] भेदभ्रांतिस्तदा पुमान् ॥ घ्रातृघ्रेयघ्राणसंज्ञामाप्नोत्यन्यां तथा त्रिधा ॥८९॥ अविद्यायां विनष्टायां घ्रातृघ्राणादिभेदधीः ॥ विनश्यतीत्यभिप्रेत्य संज्ञा नास्तीति वर्णितम् ॥९०॥ अभिज्ञोऽप्यज्ञवद्भेदं घ्रातृघ्राणादिलक्षणम् ॥ विजानातीति चेन्मैवं विद्यायां तदसंभवात् ॥९१॥ यस्यां तु विद्यावस्थायामात्मैवास्याभवज्जगत् ॥ तदा कः केन किं जिघ्रेदद्वैते परवस्तुनि ॥९२॥ दृष्टगोचरवत्सर्वं कार्यकार-

---

१ यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति तदितर इतरं जिघ्रति इति द्वैतावस्थायां सर्वव्यवहारं दर्शयती यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् येनेदꣳसर्वं विजानाति तं केन विजानीयाद्विज्ञातारमरे केन विजानीयादिति बोधकाले तं निषेधति ।

णवज्जगत् ॥ ध्वस्तात्मांध्यस्य विदुषः सम्यग्ज्ञानोदयो भवेत् ॥९३॥ ग्राहकादिविभागोऽत्र नास्ति तद्धेत्वसंभवात् ॥ चिन्मात्रस्य स्वतःसिद्धेर्विज्ञानघनतेरिता ॥९४॥ मुक्तस्य व्यवहारस्तु भ्रांतिवासनया कृतः ॥ भ्रांतिनाशेऽपि संस्कारानुवृत्तिर्दृश्यते खलु ॥९५॥ वासनामात्रसंज्ञा तु देहे सति न वार्यते ॥ वस्तुत्वभ्रांतिसंज्ञैव प्रबुद्धस्यात्र वार्यते ॥९६॥ ज्ञातृज्ञानज्ञेयरूपा न संज्ञा विषये यथा ॥ प्रतीच्यपि तथा संज्ञा प्रबुद्धस्य न विद्यते ॥ ९७ ॥ ज्ञानोत्पत्तौ न संज्ञास्तीत्यास्तां तावदिहात्मनि ॥ अपि सत्यामविद्यायां न संज्ञास्त्यात्मनीदृशी ॥९८॥ ग्राहकादि जगत्सर्वं येन कूटस्थसाक्षिणा ॥ लोकः सर्वो विजानाति जानीयात्केन तं वद ॥९९॥ बोद्धृत्वालोचनेनापि न संज्ञा प्रत्यगात्मनि ॥ न बोद्धा गृह्यतेऽन्येन बोधेन विषयेण वा ॥१००॥ व्यावहारिकसंज्ञाऽसौ संसारिण्यपि दुर्लभा ॥ किमु निःशेषविध्वस्तसंसारार्णवकारणे ॥१॥ इत्येवमपरायत्तबोधेनात्यंतिको लयः ॥ निदिध्यासनरूपोऽत्र फलभूतः प्रकीर्तितः ॥२॥ याज्ञवल्क्योऽत्र मैत्रेयीमन्वगृह्णाद्यथा तथा ॥ मुमुक्षुमनुगृह्णातु विद्यातीर्थमहेश्वरः ॥३॥ इति श्रीविद्यारण्यमुनिविरचिते अनुभूतिप्रकाशे बृहदारण्योपनिषदि मैत्रेयीविद्याप्रकाशो नाम पंचदशोऽध्यायः॥१५॥

पंचमे ब्राह्मणे दृध्यङ्ङाथर्वण उवाच याम् ॥ अश्विनोर्मधुविद्यां तामत्र स्पष्टीकरोम्यहम् ॥१॥ परस्परोपकारित्वं पृथिव्याः प्राणिनामपि ॥ यत्तन्मधुत्वं विज्ञेयमुपकारस्तु सर्जनम् ॥२॥ जंतुभिः पृथिवी सृष्टा स्वकर्मफलभुक्तये ॥ पृथिव्याऽप्यात्मभोगार्थं

१ इयं पृथिवी सर्वेषां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मधु यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्म्यं शरीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ।

सृष्टाः सर्वेऽपि जंतवः ॥३॥ पार्थिवाणि शरीराणि भुज्यंते जंतुभिस्तथा ॥ पृथिव्याऽपि धरित्रीत्वं भुज्यते जंतुधारणात् ॥४॥ अस्यां पृथिव्यां यो भास्वानामोक्षमविनश्वरः ॥ लिंगात्मा मध्वसौ सर्वभूतानां तानि तस्य च ॥५॥ अध्यात्मं यश्च शारीरो लिंगात्मा पार्थिवांशजः ॥ स चापि मधु सर्वेषां सर्वभूतानि तस्य च ॥६॥ अध्यात्मं साधिदैवं च साधिभूतमिदं जगत् ॥ एकैकस्यात्मनः कृत्स्नं भोग्यत्वेनावतिष्ठते ॥ ७ ॥ सर्वं सर्वस्य कार्यं स्यात्सर्वः सर्वस्य भोजकः ॥ इत्येषा मधुविद्याऽत्र वैषम्यात्क्लेशहारिणी ॥८॥ भूतानि भूमिर्द्वे लिंगे इत्युक्तं यच्चतुर्विधम् ॥ मध्वविद्याकृतं तस्य वस्तुतत्त्वमथोच्यते ॥९॥ अयमेव स इत्यत्र मधुरूपश्चतुर्विधः ॥ प्रपंचोऽयमिति प्रोक्तः स इत्यात्मोच्यते परः ॥१०॥ अयमेव स इत्युक्त्या सामानाधिकरण्यतः ॥ प्रत्यङ्मात्रैकयाथात्म्यं प्रपंचस्यावबोध्यते ॥११॥ स इत्यनेन निर्दिष्टमतीतग्रंथवर्णितः ॥ योऽयमित्यादिभिर्वाक्यैश्चतुर्भिः स्मार्यते परः ॥१२॥ आत्मा द्रष्टव्य इत्युक्तममृतत्वेन वर्णनम् ॥ नेति नेत्युदितं ब्रह्म तत्सर्वमभवत्त्विति ॥१३॥ आत्मामृतब्रह्मसर्वशब्दैः प्राक् प्रतिपादितम् ॥ वस्त्वस्य मधुनस्तत्त्वमिति वाक्यार्थ ईरितः ॥१४॥ उत्तरेष्वपि वाक्येषु मधुरूपमिदं जगत् ॥ ब्रह्मापि मधुनस्तत्त्वं योजयेदुक्तवर्त्मना॥१५॥ साधारणविशेषाभ्यां धर्मो भोगप्रदो द्विधा ॥ अधिदैवं तथाध्यात्ममित्यत्रासौ विभज्यते ॥१६॥ सत्यमानुषयोरेवं विभागं योजयेद्विधा ॥ पृथिव्याद्या मानुषांता विराडंशा उदीरिताः ॥१७॥ अयमात्मेति निर्देशो विराजोऽभिमतोंऽशिनः ॥ हिरण्यगर्भस्तत्रत्यः प्रोक्तस्तेजोमयोक्तितः ॥१८॥ विराड्हिरण्यगर्भाख्यस्थूलसूक्ष्मशरी-

रगः ॥ चिदाभासोऽत्र यश्चायमात्मेत्युक्त्याभिधीयते ॥१९॥ अपूर्वानपरामध्यप्रत्यग्याथात्म्यवित्तये ॥ स वा इत्यादिको ग्रंथः सदृष्टांतोऽभिधीयते ॥२०॥ ननूक्तं मधुनस्तत्त्वमयमेव स इत्यतः ॥ वचनाद्बहुपर्यायैर्भूयोऽप्येतद्दृढीकृतम् ॥२१॥ बाढमेतावता वस्तुसार्वात्म्यं स्यात्प्रपंचितम् ॥ तदेवाभिव्यज्यतेऽथ विदुषः फलरूपतः ॥२२॥ स एव मधुतत्त्वाख्य आत्मायं तत्त्वविन्मतः ॥ आधिपत्यं च राजत्वं वैदुष्यं विदुषोऽधिकम् ॥२३॥ अत्राधिपत्यशब्देन स्वातंत्र्यमभिधीयते ॥ स्वार्थः प्रत्यक्तदर्थत्वात्सहेतोर्जगदात्मनः ॥२४॥ राजत्वं राजनाद्ब्रास्वदविलुप्तात्मदर्शनात् ॥ ब्रह्मास्मीति परिज्ञानध्वस्तध्वांतत्वकारणात् ॥ २५ ॥ योऽसावविद्यया देही संसारी वाप्यभूत्पुरा ॥ स एव विद्यया ब्रह्मेत्यतोऽस्मिञ्जगदर्पितम् ॥२६॥ चक्रस्यारा यथा सर्वे नाभिनेम्योः समर्पिताः ॥ सजीवा निखिला देहा ब्रह्मविद्यर्पितास्तथा ॥२७॥ समाप्ता ब्रह्मविद्येयं कैवल्यावाप्तयेऽखिला ॥ यथोक्तब्रह्मविद्यायाः स्तुत्यर्थाख्यायिकोच्यते ॥२८॥ दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच द्विविधं मधु ॥ प्रवर्ग्यांगरविध्यानं ब्रह्मज्ञानमिति द्वयम् ॥२९॥ तं वृत्तांतमृषिः पश्यन्प्राब्रवीदश्विनौ प्रति ॥ वृत्तांतमब्रवीदृग्भ्यामृग्भ्यां च ब्रह्मवेदनम् ॥३०॥ अश्विनोर्युवयोरुग्रं लाभाय गुरुमारणम् ॥ आविष्करोमि लोकेऽस्मिन्मेघो वृष्टिं यथा तथा ॥३१॥ दध्यङ्ङाथर्वणोऽश्वस्य शिरसा युवयोर्मधु ॥ यत्प्रोवाच तदप्यत्र जानन्नाविष्करोम्यहम् ॥३२॥ छित्वा गुरोः शिरोऽन्यत्र निक्षिप्याश्वस्य यच्छिरः ॥ तदाहृत्य गुरोः स्कंधे

---

१ स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानां राजा तद्यथा रथनाभौ च रथनेमौ चाराः सर्वे समर्पिता एवमेवास्मिन्नात्मनि सर्वाणि भूतानि सर्वे देवाः सर्वे लोकाः सर्वे प्राणाः सर्व एवात्मानः समर्पिताः ।

प्रतिष्ठापयतो युवाम् ॥३३॥ सत्यप्रतिज्ञः स गुरुः सोढ्वाप्येतादृशीं व्यथाम् ॥ मधुद्वयमुवाचेति कथितोऽर्थ ऋचोर्द्वयोः ॥३४॥ ईशो [1]मनुष्यपश्वादिदेहांश्चक्रे पुरा ततः ॥ स पक्षी लिंगरूपेण भूत्वा तान्प्राविशत्प्रभुः ॥३५॥ योऽयं पुरुषशब्दोऽस्मिन्मंत्रे तस्य निरुक्तितः ॥ जीवब्रह्मैक्यतात्पर्यं मंत्रस्यास्योपवर्ण्यते ॥३६॥ पुरि शेते यतस्तस्मात्पुरुषो जीव उच्यते ॥ सर्वं पूरयतीत्येवं पुरुषो ब्रह्म भण्यते ॥३७॥ अनेन ब्रह्मणा किंचिद्बहिर्नानावृतं क्वचित् ॥ नास्त्यसंवृतमंतश्च पूरणात्पुरुषस्तथा ॥३८॥ रूपं रूपं प्रविष्टोऽयं प्रतिबिंबो भवत्ययम् ॥ तदस्य प्रतिबिंबत्वं प्रत्यग्याथात्म्यवित्तये ॥३९॥ चैतन्यात्मादयः शब्दा व्युत्पन्नाः प्रतिबिंबके ॥ लक्षयंति चिदात्मानं तेन याथात्म्यवेदनम् ॥४०॥ मिथ्याभिमानैः साभासबुद्ध्यादिपरिकल्पितैः ॥ द्रष्टा श्रोताहमित्यादिबहुरूपो विचेष्टते ॥ ४१ ॥ संत्यस्य हरयोऽक्षाख्या हरणाद्विषयान्प्रति ॥ प्राणिभेदादनंतास्ते तैस्तु संसरतीश्वरः ॥४२॥ मंत्रोक्ता हरयोऽध्यस्तास्तत्संख्या च प्रकल्पिता ॥ एतेषां तत्त्वमात्मैवेत्याह ब्राह्मणमादरात् ॥४३॥ निःशेषमधुकांडस्य तदेतदिति वाक्यतः ॥ सारः संक्षिप्यते साक्षात्करविन्यस्तबिल्ववत् ॥४४॥ अज्ञातं संशयज्ञातं मिथ्याज्ञातमिदं जगत् ॥ तदेतदित्यनूद्यास्य तत्त्वं [2]ब्रह्मेति बोध्यते ॥४५॥ निष्कारणं तन्निष्कार्यं निश्छिद्रं बाह्यवर्जितम् ॥ परोक्षप्रतिषेधार्थमात्मा ब्रह्मेति भण्यते ॥४६॥ सर्वानुभव एवायं यतः सर्वानुभूस्ततः ॥ कार्त्स्न्यात्सर्वो भवेदेष चिन्मा-

---

१ पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः पुरः स पक्षी भूत्वा पुरः पुरुष आविशदिति स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयो नैनेन किंच नानावृत्तं नैनेन किंचनासंवृतं इदं वैतन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत ।
२ तदेतद्ब्रह्मापूर्वमनपरमनंतरमबाह्यमयमात्मा ब्रह्म सर्वानुभूतिरित्यनुशासनम् ।

त्रत्वात्तथानुभूः ॥ ४७ ॥ कर्तव्यमेतद्विज्ञानमिति वेदानुशासनम् ॥ अस्यातिलंघने दोषः संसारानर्थसंगतिः ॥ ४८ ॥ कुर्वतस्तु महान् लाभः स्वात्मनः कृतकृत्यता ॥ मधुकांडार्थसर्वस्वमित्थं श्रुत्योपसंहृतम् ॥४९॥ विद्यावंशजपाद्विद्याविघ्नः सर्वो निवार्यते ॥ मुमुक्षुमनुगृह्णातु विद्यातीर्थमहेश्वरः ॥ ५० ॥ इति श्रीविद्यारण्यविरचिते अनुभूतिप्रकाशे बृहदारण्यके मधुविद्याप्रकाशो नाम षोडशोऽध्यायः ॥ १६ ॥ ॥ ॥ ॥

याज्ञवल्क्योऽश्वलादिभ्यो विजिगीषुः कथामुखात् ॥ उक्तवान्पंचमेऽध्याये तत्त्वविद्यामनेकधा ॥ १ ॥ अध्यात्ममधिभूतं च यजमानर्त्विगादिषु ॥ स्वाभाविकः परिच्छेदो मृत्युर्मर्त्यफलार्जनात्॥२॥ कालोऽपि मृत्युः कर्त्रादि मारणात्स्वात्स च द्विधा ॥ सौरोऽहोरात्ररूपेण चांद्रः पक्षादिरूपतः ॥३॥ जेतुं मृत्युत्रयं ब्रह्मलोकं प्राप्तुं च साधनम् ॥ प्रश्नैश्चतुर्भिः पप्रच्छ देवध्यानं तदुत्तरम् ॥ ४ ॥ यजमानस्य वागादेर्होत्रादेश्चाधिदैविके ॥ अग्न्यादावेकतां ध्यात्वा मुच्यते चातिमुच्यते ॥ ५ ॥ मुक्तिस्त्यक्त्वासुरं भावं देवभावस्य चिंतनम् ॥ ब्रह्मलोकोऽतिमुक्तिः स्यान्न कैवल्यमुपासनात् ॥ ६ ॥ अथ संपद उच्यंते स्वल्पे कर्मणि कर्मणः ॥ महतश्चिंतनं संपत्तया प्राप्यं महत्फलम् ॥७॥ होतृप्रयुक्त ऋग्जातित्रये संपादयेदमून् ॥ लोकांस्त्रैलोक्यमाप्नोति समत्वात्रित्वसंख्यया ॥८॥ समिन्मांसाज्यमुख्यानामुज्ज्वलत्वादिसाम्यतः ॥ देवलोकादिसंपत्त्या देवलोकादिमाप्नुयात् ॥९॥ ब्रह्मणो मनसो वृत्तिष्वनंतास्वंतवर्जितान् ॥ विश्वान्संपादयन्देवाननंतं लोकमाप्नुयात् ॥१०॥ उक्तास्त्वृग्जातिषूद्गात्रा गीयमानासु संपदा ॥ लोकत्रयस्य प्राणादेरपि लोकत्रयं व्रजेत् ॥ ११ ॥

गयाभूर्ब्राह्मणो विष्णुरन्नं ब्रह्मेति संपदा ॥ श्राद्धे फलस्य बाहुल्यं मत्वा संपादयंति हि ॥१२॥ बंधाख्यमृत्युस्तन्मृत्युर्विदुषोऽनुक्रमस्तथा ॥ प्रयोजकस्तयोर्मृत्योः प्रेरकं चात्र पृच्छ्यते ॥१३॥ अधिभूताधियज्ञादिपरिच्छेदः फलात्मकः ॥ मोहासंगात्मको मृत्युर्ग्रहातिग्रहबंधवान् ॥१४॥ ग्रहा घ्राणादयो ज्ञेया गृह्णंति विषयान्यतः ॥ घ्राणादिप्रेरकत्वेन गंधाद्याः स्युरतिग्रहाः ॥१५॥ पूर्वब्राह्मणसंप्रोक्तध्यानसंयुक्तकर्मभिः ॥ परिच्छेदविनाशेऽपि मृत्योः सर्वस्य न क्षयः ॥१६॥ हिरण्यगर्भरूपेऽपि श्रूयंते हि क्षुधादयः ॥ अतो मृत्योरशेषस्य मृत्युरन्योऽत्र पृच्छ्यते ॥१७॥ निर्णयौ मृत्युतन्मृत्यू बंधमोक्षावबुद्धये ॥ दुर्वचौ च ग्रहादीनां लोकेऽत्यंताप्रसिद्धितः ॥१८॥ ग्रहातिग्रहवद्बंधो देहेऽप्येष तथाप्यसौ ॥ जन्मांतरेष्वसंचारान्नाप्रसिद्धो न दुर्वचः ॥१९॥ एकमेव मनः सर्वजन्मगामीति तार्किकाः ॥ अक्षांतराण्यपीत्यन्ये तेन संख्याऽत्र दुर्वचा ॥२०॥ मनोन्यायः समोऽन्येषु तेनादोषविवक्षया ॥ पर्यग्रहीदष्टसंख्यामन्यांतर्भाव[1] उह्यताम् ॥२१॥ यस्येंद्रियस्य योऽर्थोऽस्मिन् जन्मन्यन्यत्र तत्तथा ॥ उतान्यथेति संदेहात्संख्येयं पृच्छ्यते पुनः ॥२२॥ दृष्टानुसार्यदृष्टं तु कल्पनीयमितीदृशात् ॥ न्यायात्प्राह यथा दृष्टामिंद्रियार्थव्यवस्थितिम् ॥२३॥ बंधत्वं विशदीकर्तुं ग्रहातिग्रहकल्पनम् ॥ मोचनीयो ग्रहग्रस्तस्तथैवाक्षार्थबंधनात् ॥ २४ ॥ ग्रस्तं हिरण्यगर्भांतं मृत्युना सकलं जगत् ॥ ग्रहातिग्रहरूपेण मृत्युस्तस्यास्ति वा न वा ॥२५॥ अस्ति चेदनवस्था स्यादनिर्मोक्षोऽन्यथा भवेत् ॥ इत्यसौ दुर्वचः प्रश्नो दृष्टांतेनापनुद्यते ॥२६॥ वह्नेः सर्वाशिनो मृत्योर्यथा

१ ज्ञानेंद्रियपंचकं वाक्पाणी द्वौ मनश्चेत्यष्टौ सर्वेंद्रियाणामुपलक्षणम् ।

मृत्युर्जलं महत् ॥ बंधमृत्योस्तथा मृत्युरज्ञानं बंधहानये ॥२७॥ अज्ञानमृत्योर्विज्ञानं मृत्युस्तस्यापि तत्तथा ॥ तत्कातकरजोन्यायाज्ञानवस्थामिहानयेत् ॥२८॥ प्राक्तनान्यपि जन्मानि सम्यग्ज्ञानमपह्नुते ॥ अपह्नुते स्वमित्यस्मिन्नर्थे नैषा चमत्कृतिः ॥२९॥ अथ तत्त्वविदः प्राणा उत्क्रामंत्यथवा न हि ॥ स्यात्पुनर्जनिरुत्क्रांतावनुत्क्रांतौ मृतिः कथम् ॥३०॥ नोत्क्रामंति न तिष्ठंति किंतु निर्वातदीपवत् ॥ न कारणं शिष्यतेऽत्र तस्य ज्ञानेन निह्नुतेः ॥ ३१ ॥ अनारब्धफलं कर्म तदुत्क्रांते प्रयोजकम् ॥ स्थितेर्निमित्तमारब्धं ते नष्टे ज्ञानभोगतः ॥३२॥ उपादाननिमित्ताभ्यां दीनानामुत्क्रमः कथम् ॥ कथं वाऽत्र स्थितिस्तस्माद्युक्तमात्यंतिको लयः ॥ ३३ ॥ प्राणत्यागेन देहोऽयं म्रियते बाह्यवायुना ॥ आपूर्णस्थोऽल्पमापन्नो निश्चेष्टो दृश्यते यतः ॥३४॥ प्राण एव विलीयंते किं वा सर्वं प्रयोजकम् ॥ आद्ये प्राणजनिर्भूयो द्वितीये नाम तत्कथम् ॥३५॥ अप्रयोजकनामैव शिष्यते न प्रयोजकम् ॥ अविद्याकामकर्मादि नोक्तदोषद्वयं ततः ॥३६॥ परवाचाभिनिष्पत्तेर्विदुषो बंधनं प्रति ॥ नामाप्रयोजकं युक्तस्तच्छेषः परदेहवत् ॥३७॥ मुक्तावप्यवशिष्टत्वान्नाम्नोऽनंतत्वसाम्यतः ॥ विश्वान्संपादयन्देवाननंतं लोकमश्नुते ॥३८॥ ग्रहातिग्रहबंधाख्यमृत्योर्यत्स्यात्प्रयोजकम् ॥ कालकर्मेश्वरादीनां मध्ये तत्किमितीर्यते ॥३९॥ अविद्वद्विषयः प्रश्नो विदुषो बंधसंक्षयात् ॥ आतत्त्वबोधमज्ञानी बध्यतेऽनंतजन्मभिः ॥४०॥ अनुगृह्णंति वागादीन्स्वांशैरग्न्यादिदेवताः ॥ भोगक्षये मृतौ स्वांशान्संहरंति यथा तथा ॥४१॥ भूयो देहग्रहे भूयो देहस्थानेषु देवताः ॥ अंशं निदधति स्वं स्वं न देहग्रहणात्पुरा ॥ ४२ ॥ अधिष्ठातृवियो-

गेन न्यस्तदात्रोपमैर्युतः ॥ वागादिभिरसौ किंस्वित्प्रयोजकमुपाश्र-
येत् ॥४३॥ किं कारणात्मतामेति किंवा केन चिदात्मता ॥ अव-
तिष्ठत एवायं किं वा कर्मैव संश्रितः ॥४४॥ गुणान्वा यदि वेशानं
कालं वा दैवमेव वा ॥ यदृच्छां संततिं शून्यं विनाशं वेति भण्य-
ताम् ॥४५॥ प्रश्नेन तुष्टः संत्यज्य विजिगीषां सहामुना ॥ निर्गतौ
विजिगीषुभ्यो मिथो निर्णयमूचतुः ॥४६॥ संसारभूमिवर्तित्वान्नै-
वायं कारणाश्रयः॥ कर्मादिपरतंत्रत्वात्स्वाश्रयोऽयं न चेष्यते ॥४७॥
जडत्वाद्गुणकालादिर्न जीवं नेतुमर्हति ॥ हठो यदृच्छाशून्यं तु
मानहीनं तथेतरत् ॥४८॥ जीवेश्वरौ स्वतंत्रौ चेद्विधिशास्त्रमनर्थ-
कम् ॥ अतः साधारणो जन्महेतुः कर्मैव शिष्यते ॥४९॥ सति
कर्मणि वैचित्र्यं देहानामुपपद्यते ॥ देवेशानुगृहीतत्वाज्जाड्यदोषो न
कर्मणः ॥५०॥ तृतीयब्राह्मणे पुण्यफलावधिरुदीर्यते ॥ अश्वमेधः
परं पुण्यं ब्रह्मलोकफलावधि ॥५१॥ प्रत्यक्षस्थावरत्वाख्यः स्पष्टः
पापफलावधिः ॥ विज्ञायतेऽद्वयज्ञानादियत्ता हेयसंसृतेः ॥ ५२ ॥
अश्वमेधादि यत्पुण्यं महोपासनया युतम् ॥ तत्फलं संसृतिस्तस्य
भुज्युना पृच्छ्यतेऽवधिः ॥५३॥ ब्रह्मांडाद्बहिरंतश्च समष्टिव्यष्टि-
रूपिणः ॥ व्याप्तिर्हिरण्यगर्भस्य संसारस्यावधिर्मतः ॥५४॥ आगमै-
काधिगम्योऽयमर्थ इत्युपदर्शयन् ॥ गंधर्वाख्यायिकामाह गंधर्वस्त-
द्गुरुस्ततः ॥५५॥ लोकांस्तानपि गंधर्वादश्वमेधकृतां फलम् ॥ श्रुत्वा
पारिक्षितोक्त्यात्र वादिनं तं व्यमोहयत् ॥५६॥ अश्वमेधकृतो वक्ति
भुज्युः पारिक्षिता इति ॥ परितः क्षितिमावेष्ट्य स्थिता इति विव-
क्षया ॥५७॥ द्विर्याज्ञवल्क्यमुद्दिश्य प्रश्नोक्तिस्त्रासजन्मने ॥ अत्र
स्वातींद्रियज्ञानं दर्शयन्निदमुक्तवान् ॥५८॥ गंधर्वेण गतिः प्रोक्ता

अश्वमेधकृतामिति ॥ भूयः पृष्टः स्वयं वक्तुं प्राह लोकस्य विस्तृतिम् ॥५९॥ आदित्यरथगत्याध्वमितो यावानहर्निशम् ॥ द्वात्रिंशद्गुणितस्तावान्[1]व्याप्तो भानुगभस्तिभिः ॥६०॥ इयानेव प्राणिभोगसिद्धये लोक इष्यते ॥ इतः परस्ताद्द्विगुणा पृथिव्यालोकवर्जिता ॥६१॥ अंतरालोकयुक्तः सन्बहिरालोकवर्जितः ॥ लोकालोकगिरिर्मध्ये पृथिव्योरनयोः स्थितः ॥६२॥ समुद्रो द्विगुणो भूमेर्घनोदाख्यो बहिः स्थितः ॥ अंडाद्बहिर्घनोदोऽयमिति पौराणिका जगुः ॥६३॥ पुराणं बाध्यते श्रुत्या ध्यानार्था वै श्रुतिर्मता ॥ सर्वथाऽप्यंडरूपोऽयं वैराजो देह इष्यताम् ॥६४॥ योंऽडाद्बहिः स्थितो वायुः सूत्रात्मेति श्रुतीरितः ॥ एषोऽश्वमेधकृत्पुण्यपरिपाको न चापरः ॥६५॥ क्षुरधाराद्युपमितः संधिर्योंऽडकपालयोः ॥ तेन बाह्ये नयत्येतानश्वमेधस्य देवता ॥६६॥ ते वायुभावमापन्नाः समष्टिव्यष्टिरूपतः ॥ ॥ अंडाद्बहिस्तदंतश्च तिष्ठंत्यखिलरूपिणः ॥६७॥ अध्यात्मादिविभागेन व्याप्तिर्व्यष्टिरितीरिता ॥ समस्तत्वेन संव्याप्तिः समष्टिरिति कीर्तिता ॥६८॥ समष्टिव्यष्टिरूपं य उपास्तेऽसौ सकृन्मृतः ॥ हिरण्यगर्भो भूत्वाऽथ मुच्यते म्रियते न तु ॥६९॥ संसारोत्कर्षसीमेत्थं वर्णिता ज्ञानकर्मजा ॥ इतो विरक्तिमालक्ष्य वर्ण्यते स्वात्मनिर्णयः ॥७०॥ [2]चतुर्थब्राह्मणे मोक्षयोग्यः कर्तृत्ववर्जितः ॥ विषयो ब्रह्मविद्याया अस्त्यात्मेति निरूप्यते ॥७१॥ अहं-

---

१ सार्धत्रयः कोटयः सप्त लक्षाणि सहस्राणि चतुर्दश सार्धद्विशतं त्रिचत्वारिंशत्। २ ॐअथ हैनमुषस्तश्चाक्रायणः पप्रच्छ याज्ञवल्क्येति होवाच यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वांतरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्वांतरः कतमो याज्ञवल्क्य सर्वांतरो यः प्राणेन प्राणिति स त आत्मा सर्वांतरो य उदानेनोदानिति स त आत्मा सर्वांतर एष त आत्मा सर्वांतरः।

धीकर्मशास्त्राभ्यां द्रष्टेर्द्रष्टा न सिध्यति ॥ किं तु द्रष्ट्यादिसंयुक्ते- ब्रह्मताऽस्य विरुध्यते ॥७२॥ अतो ब्रह्मत्वयोग्यस्य प्रतीचोऽत्र बुभुत्सया ॥ अनूद्य ब्रह्मतामादौ तदर्हं परिपृच्छति ॥७३॥ यत्सा- क्षादपरोक्षं स्याद्ब्रह्म तद्रूपतामयम् ॥ अर्हेत्सर्वांतरस्ताद्दग्य आत्मा ब्रूहि तं मुने ॥७४॥ साक्षादिति पदेनात्र व्यवधानं निवार्यते ॥ स्वर्गलोकादिवद्ब्रह्म नातो देशांतरादिगम् ॥७५॥ अगौणताऽपरो- क्षोक्त्या ब्रह्मत्वस्य विवक्षिता ॥ नामादेरिव नो गौणं ब्रह्मत्वं प्रत्य- गात्मनः ॥७६॥ आविर्भावोऽपरोक्षत्वं तच्चास्त्यव्यवधानतः ॥ स्वप्र- काशं स्वभावत्वादिति वार्थः पदद्वये ॥ ७७ ॥ अव्यावृताननुगतं वस्तु ब्रह्मगिरोच्यते ॥ अकारणमकार्यं तदित्यनेनोदितं भवेत् ॥७८॥ अमुमर्थमिदं प्राप्तं न चेदात्मैव तद्भवेत् ॥ यतोऽत आत्म- रूपार्थं य आत्मेति विशेष्यते ॥७९॥ सजातीयविजातीयद्वितीया- र्थनिवृत्तये ॥ सर्वांतर इति प्राह सार्वात्म्यं तेन सिध्यति ॥८०॥ सार्वात्म्यं ब्रह्मणो योग्यं तच्च जीवात्मनीरितम् ॥ मुख्यापरोक्ष्यं जीवस्य योग्यं ब्रह्मणि वर्णितम् ॥८१॥ अभेदो वास्तवो जीवब्रह्म- णोर्व्यत्ययादतः ॥ विवक्षितस्तत्प्रसंगाद्वादिव्यामोह आर्थिकः ॥८२॥ आत्मनो ब्रह्मता मुख्या ब्रह्मणोऽप्यात्मता तथा॥ प्रत्यग्दृष्ट्या पराग्दृष्ट्या मिथो ब्रह्मात्मनोर्भिदा ॥८३॥ ब्रह्मत्वमात्मनो रूपं तमसा तत्तिरो- हितम् ॥ आत्मत्वं ब्रह्माणोऽप्येवं ततो जीवेशभेदधीः ॥८४॥ तमसो बोधनिध्वंसादब्रह्मानात्मताहृतेः ॥ प्रत्यङ्मात्रावशेषत्वात्स्यामपूर्वादि- मानहम् ॥८५॥ अमूढो याज्ञवल्क्योऽत्र प्रत्यग्दृष्ट्या परामृशत् ॥ प्रत्याहैष त आत्मेति तं सर्वांतरमद्वयम् ॥८६॥ मुख्योऽपरोक्षो यः प्रत्यक् स्वप्रकाशो विभासते ॥ एतच्छब्देन तं प्राह विस्पष्टत्व-

विवक्षया ॥८७॥ अंतर्मुखस्य विस्पष्टो नायं संदेहगोचरः ॥ इत्यभिप्रेत्य तत्प्रश्ने बहुमानं तु नाकरोत् ॥८८॥ षष्ठ्यंतस्य त इत्यस्य युष्मद्बुद्ध्युपलक्षितम् ॥ देहादिसर्वमात्मयोन्नो दृश्यमर्थो विवक्षितः ॥८९॥ आत्मेत्यव्यभिचारेण स्वरूपं यत्तदुच्यते ॥ प्रमात्राद्यागमापायसाक्षित्वात्तत्स्वरूपता ॥९०॥ यद्यस्मिन्व्यभिचार्येतत्तत्स्वरूपं न कुत्रचित् ॥ कुंडलित्वं यथा पुंसः साक्षित्वव्यभिचारवान् ॥९१॥ व्यभिचारो मिथो यद्वत्प्रमात्रादेः स्वसाक्षिकः ॥ साक्षिणोऽव्यभिचारस्तु तथा किंसाक्षिको भवेत् ॥९२॥ आत्मात्मवत्त्वसंबंधः षष्ठ्योक्तो जगदात्मनोः ॥ स्वतो निरात्मकं दृश्यमात्मना सात्मतां व्रजेत् ॥९३॥ आत्मा सर्वस्वरूपत्वात्सर्वांतरगिरोदितः ॥ सर्पधारादिकल्पेषु रज्जोरांतरता यथा ॥ ९४ ॥ आत्मनोऽनवशेषेण तदन्यार्थाभिसंगतेः ॥ प्रत्यङ्मात्रतयैवान्यद्बोधादात्मनि लीयते ॥९५॥ इत्थं स्वानुभवाद्याज्ञवल्क्यः सर्वांतरं जगौ ॥ अन्यः संशयमापाद्य जिगीषुः परिपृच्छति ॥९६॥ तवात्मेत्युत्तरं दत्तं ममात्मेति त्रिधेक्ष्यते ॥ देहो लिंगं च साक्षीति तेषु सर्वांतरश्च कः ॥९७॥ सर्वांतरत्वं दुःसाध्यमल्पयोर्देहलिंगयोः ॥ सद्भावेऽन्यस्य किं मानमप्रमेयस्य साक्षिणः ॥९८॥ एवं पृष्टः स्वानुभूतौ वादिनोऽनधिकारताम् ॥ मत्वाऽनुमानतः सत्तामात्मनः प्रत्यपादयत् ॥९९॥ स्वप्रभे माननैष्फल्यादप्रमेयत्वमिष्यते ॥ वादिभ्रांतिनिवृत्त्यर्थं मानोक्तौ ह्रियतेऽत्र किम् ॥१००॥ प्राणादिकरणैश्चेष्टा कर्तृपूर्वा क्रियात्वतः ॥ छिदिक्रियावत्कर्तृत्वं न युक्तं देहलिंगयोः ॥१॥ कारणप्रेरकः कर्ता करणैः प्रेर्यते वपुः ॥ लिंगं तु करणात्मत्वान्नैव कर्तृत्वमर्हति ॥२॥ मुखसंचारिणा जाग्रद्यः प्राणेनानतीक्षता ॥ सर्व-

प्रत्यक्तमः सोऽयमात्मा सर्वांतरावधिः ॥३॥ सुप्तेऽस्मिन्करणग्रामे योऽसुप्तोऽलुप्तदृष्टिकः ॥ अथ सर्वान्नामरूपान्पश्यन्प्राणिति[1] वायुना ॥४॥ स्पष्टेषु बहुलिंगेषु मानाभावमचूचुदः ॥ इत्युपालब्धये लिंगान्यपानादीन्युदाहरत् ॥५॥ एकादशेंद्रियोत्पन्नचेष्टानामुपलक्षणम् ॥ प्राणाद्युदाहृतिस्तेन लिंगानां बहुता स्फुटा ॥६॥ प्राणादिकार्यकरणैः स्वतोऽसंहत एकलः ॥ अकुर्वन् कुरुते चेष्टामयस्कांतो मणिर्यथा ॥७॥ रथादौ नियता चेष्टा चेतनेनानधिष्ठिते ॥ न दृष्टा चेतनस्तेन प्राणादीनां प्रवर्तकः ॥८॥ ससूत्रदारुयंत्रेण सदृशं लिंगवद्वपुः ॥ यः प्रेरयत्यसावात्मेत्युक्तेऽन्योपजहास तम् ॥९॥ यथा गां दर्शयेत्युक्ते लिंगं मूढो वदेत्तथा ॥ आपरोक्ष्यमनुक्त्वा त्वं लिंगेनावेदयस्यहो ॥१०॥ लिंगं वाच्यं परोक्षेऽर्थे न त्वात्मनि परोक्षता ॥ इति मत्वा हैवकारं परोक्षस्य निवर्तकम् ॥११॥ मुख्यापरोक्षमुक्तं त इति दर्शयितुं पुनः ॥ प्रत्यग्दृष्टिपरं वाक्यमुत्तरत्वेन वक्त्यसौ ॥१२॥ विद्वद्भाषामबुध्वाऽन्यः स्वरूपादिष्विवात्मनि ॥ अक्षजन्यापरोक्षत्वं मत्वाऽपृच्छत्पुरेव तम् ॥१३॥ दृष्टश्रुतमतज्ञातेष्वेषु सर्वांतरस्तु कः ॥ दृष्ट्याद्यगोचरः प्रत्यङ्किति प्रश्नमपाकरोत् ॥१४॥ वेद्मीति यद्बलाद्वक्ति न वेद्मीति च यद्बलात् ॥ योगिनोऽनुभवंत्येतमगोचरतयैव हि ॥१५॥ उक्तवर्त्मातिरेकेण नात्मवस्तु घटादिवत् ॥ शक्यते प्रतिनिर्देष्टुं प्रमाणाऽगोचरत्वतः ॥१६॥ द्रष्टृदर्शनदृश्यानां साक्षिणः स्वप्रभस्य तत् ॥ प्रमाणगोचरत्वं तु वस्तुस्वाभाव्यतो भवेत् ॥१७॥ दृष्टेर्न[2]

१ अर्थान्सवासनारूपानश्नन्प्राणिति वायुना । इति वा पाठः । २ कतमो याज्ञवल्क्येति सर्वांतरो न दृष्टेर्द्रष्टारं पश्येन्न श्रुतेः श्रोतारꣳ शृणुयान्न मतेर्मंतारमन्वियान्न विज्ञातेर्विज्ञातारं विजानीयादेष त आत्मा सर्वांतरोऽन्यदार्तं ततो होषस्तश्चाक्रायण उपरराम ।

पश्येद्द्रष्टारमिति प्रत्युत्तरं वचः ॥ वक्त्यगोचरतामेतद्वाक्यं विप्रियते स्फुटम् ॥१८॥ चक्षुर्जन्यमनोवृत्तिश्चिद्युक्ता रूपभासिका ॥ दृष्टिरित्युच्यते द्रष्टा दृष्टेः कर्तेति लौकिकैः ॥१९॥ अतो दृष्टिद्वयं वाक्ये भाति षष्ठ्यंतशब्दतः ॥ एका दृष्टिस्तृजंतेन धातुनाऽन्येति तद्द्वयम् ॥२०॥ प्रमातुर्ज्ञायते वृत्तिश्चक्षुषा रूपरंजिता ॥ द्रष्टव्यं तु तया रूपं न साक्षी दृश्यते तया ॥२१॥ दृष्टेर्द्रष्टारमात्मानं दृष्ट्या पश्येन्न दृश्यया ॥ इति वाक्यं मुनिर्वक्ति वर्णितं न्यायगर्भितम् ॥२२॥ येन चक्षुरिदं दृष्टं चक्षुषा यन्न पश्यति॥ ब्रह्म विद्धि तदेव त्वमिति श्रुत्यंतरे स्फुटम् ॥२३॥ श्रुतिः श्रोत्रजधीवृत्तिस्तस्याः श्रोताऽवभासकः ॥ श्रुत्या शब्दावगाहिन्या श्रोतारं शृणुयान्न तम् ॥२४॥ ऊहापोहात्मधीवृत्तिर्मतिस्तस्याः प्रकाशकम् ॥ अनूह्यमनपोह्यं तं न मन्वीथास्त्वमेतया ॥२५॥ अस्पष्ट ऊह्य आत्मा तु विस्पष्टो भानरूपतः ॥ अनपोह्योऽनपायित्वादात्मा नापैति कर्हिचित् ॥२६॥ निश्चयात्मकधीवृत्तिर्विज्ञातिस्तद्विभासकम् ॥ असंदिग्धं तया वृत्त्या न विज्ञातुं त्वमर्हसि ॥२७॥ दृष्टश्रुतमतज्ञातेष्ववितथमात्मा न कश्चन ॥ किं तर्ह्येष तवात्मेति प्रोक्तः सर्वांतरः पुरा ॥२८॥ यः सर्वं विषयीकुर्वन्विषयीक्रियते न हि ॥ किं तु भाति स्वयं सोऽयं सर्वांतर इतीरितः ॥२९॥सर्वांतरत्वं सार्वात्म्यमन्यस्मिन्सति तत्कुतः ॥ न चेदन्यत्तदा सर्वशब्दार्थो नेति शंकिते ॥३०॥ अतोऽन्यदार्तमित्याह दोषद्वयनिवृत्तये ॥आर्तं मायामयं तस्य तत्त्वज्ञानेन पीडनात् ॥३१॥ सर्पादीनां कल्पितानां रज्जुरात्मा यथा तथा ॥ मायामयस्य सर्वस्य चिद्वस्त्वात्मेति सुस्थितम् ॥३२॥ पंचमब्राह्मणे[1] पूर्व-

---

१ ॐअथ हैनं कहोलः कौषीतकेयः पप्रच्छ याज्ञवल्क्येति होवाच यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वांतरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्वांतरः कतमो

मुक्तस्य प्रत्यगात्मनः ॥ ब्रह्मत्वसाधनं बोधो मुक्तलक्ष्म च वर्ण्यते॥३३॥ उषस्तपृष्टादन्यत्वं निवर्तयितुमात्मनः ॥ यदेव साक्षादित्युक्तादेवकारः प्रयुज्यते ॥३४॥ उपदेशस्य विषयस्त्वमर्थः शोधितः पुरा ॥ न ब्रह्मत्वं सम्यगुक्तमिति पृच्छति तत्पुनः ॥३५॥ अशनायादिरहितब्रह्मताया अभाषणे ॥ न स्यात्सर्वांतरत्वादि संसारिणि चिदात्मनि ॥३६॥ इत्यभिप्रेत्य तेनोक्तं साक्षादित्यादिकं पुनः ॥ अनूद्य सर्वं पप्रच्छ कहोलो ब्रह्मरूपताम् ॥३७॥ त्वमर्थाच्छोधिताज्ञान्यद्ब्रह्मेत्येतद्विवक्षया॥ उक्तमेवोत्तरं भूय एष इत्याद्यवोचत ॥३८॥ क्षुत्पिपासे शोकमोहौ जरामृत्यू इतीदृशैः ॥ त्रिभिर्युग्मैर्विशिष्टानां मध्येऽसौ कतमो वद ॥३९॥ यद्यन्यतम एतेषां तस्य न ब्रह्मता तदा ॥ एतेष्वनंतर्भूतस्तु न कोऽप्यात्मा जनैर्मतः ॥४०॥ विद्वज्जनानुभूत्यैष क्षुधादेरवभासकः ॥ प्रसिद्ध इत्यभिप्रेत्य ब्रह्मत्वेन तमुक्तवान् ॥४१॥ अत्येति योऽशनायादीन्विचारेण निरूपणे ॥ क्षुधादिसाक्षी तस्यास्य ब्रह्मत्वं केन वार्यते ॥४२॥ नन्वेक आत्मा मूढानां विदुषां चेति ते मतम् ॥ उक्तोर्मिषट्कातीतत्वं तद्वत्त्वं चास्य तत्कथम् ॥४३॥ अविचारविचाराभ्यां यथा सर्पत्वरज्जुते ॥ तथात्मन्यपि संसारभावाभावावितीक्षताम् ॥ ४४ ॥ क्षुत्पिपासे प्राणधर्मौ शोकमोहौ तु मानसौ ॥ जरामृत्यू देहधर्मावात्मधर्मो न कश्चन ॥४५॥ प्राणसंचारबाहुल्याद्गमनादिश्रमे सति ॥

---

याज्ञवल्क्य सर्वांतरो योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येत्येतं वैतमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवतस्तस्माद्ब्राह्मणः पांडित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यं च पांडित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एवातोऽन्यदार्तम् ।

क्षुत्पिपासाजनिस्तेन प्राणधर्मत्वमेतयोः ॥४६॥ इष्टस्य वस्तुनोऽसिद्धौ चेतसो याऽनवस्थितिः ॥ स शोको मनसो धर्मो मोहश्च विषयभ्रमः ॥४७॥ जरा देहस्य शैथिल्यं मृत्युः प्राणवियुक्तता ॥ ते सर्वेऽप्यात्मनि भ्रांत्या कल्पिता व्योम्नि नैल्यवत् ॥४८॥ यः स्वकारणसंसर्गः क्षुधादेः प्रलये मतः ॥ अनात्यंतिकरूपत्वात्सोऽत्ययोऽत्र न गृह्यते॥४९॥ तत्कारणनिषेधो यः स्वमहिम्नैव वस्तुनः ॥ तमत्ययं मोक्षविधौ तद्विद्वांसः प्रचक्षते ॥ ५० ॥ प्राणहेतुस्तमः प्राणधर्माभ्यामुपलक्ष्यते ॥ सूत्रात्मा शोकमोहाभ्यां जरया मृत्युना विराट् ॥५१॥ तमः सूत्रं विराजं च योऽत्येत्यात्मा स्वभावतः ॥ असंगस्तत्परं ब्रह्म साक्षादित्यादिलक्षणम् ॥५२॥ यथा विशुद्धमाकाशं सति वाऽसति वामले ॥ नीहारादौ तथैवात्मा कार्यकारणवस्तुनि ॥५३॥ परमात्मस्वभावोऽयं कहोलाय प्रपंचितः ॥ तद्बोधसाधनं त्याग एतमित्यादिनोच्यते ॥५४॥ उत्पन्नसम्यग्ज्ञानस्य संन्यासो लक्षणं यतः ॥ साधनं च तदुत्पत्तौ संन्यासोऽतोऽत्र गम्यताम् ॥५५॥ ब्रह्मात्मनोर्यदेकत्वं ब्राह्मणद्वयनिश्चितम् ॥ एतं तमिति शब्दाभ्यां तदैकात्म्यमनूद्यते ॥५६॥ अत्येति योऽशनायादीनेतं सर्वांतरं पुरा ॥ उदितं तं विदित्वाऽथ व्युत्तिष्ठत्येषणत्रयात् ॥५७॥ ब्रह्मप्रश्नेन पृष्टे ते तद्बोधफलसाधने ॥ इति मत्वोत्तरत्वेन व्युत्थानद्वयमुच्यते ॥५८॥ पूर्वं विदित्वा प्रश्नात्तु व्युत्थायेत्यन्वयाच्छ्रुतात् ॥ विद्वत्संन्यास आभाति ब्रह्मविद्याफलात्मकः ॥५९॥ व्युत्थायाथ विदित्वेति व्यत्ययेनार्थिकान्वयात् ॥ सिद्धो विविदिषात्यागः स्पष्टः श्रुत्यंतरेष्वसौ ॥६०॥ स्वात्मलोकं समिच्छंतः प्रव्रजंतीति वक्ष्यति ॥ त्यागेनैकेऽमृतत्वं तु प्राप्ता इत्यपरा श्रुतिः ॥६१॥ ब्राह्मणग्रहणं श्रुत्वा विप्रा-

णामेव भाष्यकृत् ॥ संन्यासेऽधिकृतिं प्राह चतुर्थाश्रमरूप्यसौ ॥६२॥ विद्यांगं तत्फलात्मानं गार्गीविदुरयोरपि ॥ स्त्रीशूद्रयोर्भाष्यकारः संन्यासमनुमन्यते ॥६३॥ पुत्रैषणेति पुत्रार्थं दारस्वीकारवांछनम् ॥ कर्मणां साधने वित्ते तृष्णा वित्तैषणा मता ॥ ६४ ॥ लोकैषणेति देवादिलोकार्थोपासना श्रुता ॥ न कश्चिदन्यः संसार उक्तादस्त्येषणात्रयात् ॥६५॥ मनुष्यलोकः पुत्रेण पितृलोकस्तु कर्मणा ॥ विद्यया देवलोकश्चेत्यब्रवीत्संग्रहश्रुतिः ॥६६॥ न्याय्यां वृत्तिं समुल्लंघ्य तद्विरुद्धतया स्थितिः ॥ व्युत्थानमुदितं राज्ञः सामंतो व्युत्थितो यथा ॥६७॥ भिक्षया लक्ष्यते चर्या परिग्रहविवर्जिता ॥ किं भोग्यं परिगृह्णीयात्सर्वभोग्येषु दोषकृत्॥६८॥लोकत्रयार्थैषणाभ्यो व्युत्थानं चापरिग्रहः ॥ द्वयं बोधमहिम्नैव विदुषां न तु यत्नतः॥६९॥ आनंदैकस्वभावं स्वमात्मानं पश्यतः कुतः ॥ कामः परिग्रहो वा स्याद्योऽकाम इति वक्ष्यति ॥७०॥ एषणात्रय एतस्मिन्समाना बंधहेतुता ॥ इति मत्वैकता तासां त्याज्यैवेत्यब्रवीच्छ्रुतिः ॥७१॥ कर्मण्येवाधिकारस्ते मा फलेष्विति शास्त्रतः ॥ एषणात्वात्फलं त्याज्यं न तु कर्मादिसाधनम् ॥७२॥ इति भ्रमं व्युदसितुं प्राब्रवीत्साध्यसाधने ॥ उभे अप्येषणे एवेत्यतस्त्यागस्तयोर्द्वयोः ॥७३॥ अविशुद्धधियः कर्मण्यधिकारेऽपि शुद्धधीः ॥ सत्यां विविदिषोत्पत्तौ तदर्थं कर्म संत्यजेत् ॥७४॥ यस्माद्ब्रह्मविदः पूर्वे फलसंन्यासमाप्नुवन् ॥ तस्माद्विविदिषुः कुर्यात्पांडित्यं फलसिद्धये ॥७५॥ पांडित्यबाल्यमौनानि श्रवणादीनि तैरयम् ॥ भवति ब्राह्मणस्तत्र ब्राह्मण्यं ब्रह्मरूपता ॥७६॥ पंडेति बुद्धेर्नामैतत्सा जाता यस्य नामतः ॥ स पंडितस्तस्य कर्म पांडित्यं श्रवणं तु तत् ॥७७॥ आचार्याद्यागमा-

च्छुत्वा निःशेषं वेदनं ततः ॥ बालभावेन तिष्ठासेत्युक्त्वा मननतत्परः ॥७८॥ श्रवणं शास्त्रतात्पर्यं निश्चयो मननं पुनः ॥ अर्थासंभावनोच्छित्त्येत्युक्तीनामनुचिंतनम् ॥७९॥ पांडित्येन विदित्वाऽथ छित्त्वा बाल्येन संशयम् ॥ मुनिर्ध्यानसमाधिभ्यां भवेद्धीवृत्तिशांतये ॥८०॥ प्रशांतवृत्तिके चित्ते परमानंददीपके ॥ कृतकृत्यो ब्रह्मभावं गतो ब्राह्मण उच्यते ॥८१॥ केनेति[1] लक्षणप्रश्नो येनेदृक्तेन लक्ष्यताम् ॥ इत्युत्तरवचो योऽयं तस्यार्थः प्रविविच्यते ॥ ८२ ॥ गीतायां कुत्रचित्प्रोक्तं स्थितप्रज्ञस्य लक्षणम् ॥ अन्यत्र विष्णुभक्तस्य गुणातीतस्य च क्वचित् ॥८३॥ येन चिह्नेन तत्रायमीदृगेव निरेषणः ॥ उपलक्षयितुं शक्यस्तदेवाऽस्त्यस्य लक्षणम् ॥ ८४ ॥ ब्रह्म यादृक्तादृगेव भवेद्विद्वान्विबोधतः ॥ बोधोऽतो लक्षणं तस्य बोधश्च स्वात्मसाक्षिकः ॥८५॥ अतोऽन्यदार्तमित्येष व्यतिरेकस्त्रिधोच्यते ॥ प्रतीचो ब्रह्मतेहोक्ता भेद आर्तस्ततस्तयोः ॥८६॥ निरेषणत्वं विद्याया हेतुरार्ता इहैषणाः ॥ विदुषो लक्षणं बोध आर्तं तल्लक्षणांतरम् ॥८७॥ षष्ठेऽस्मिन्[2]ब्राह्मणे ब्रह्मकार्यं सर्वं विविच्यते ॥ सर्वांतरत्वं सुज्ञेयं ब्रह्मणः सर्वनिर्णयात् ॥८८॥ यद्यत्कार्यं कारणेन व्याप्तमंतर्बहिश्च तत् ॥ इति तर्केण पप्रच्छ कारणस्य परंपराम् ॥ ८९ ॥

---

१ स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एवातोऽन्यदार्तं ततो ह कहोलः कौषीतक उपरराम । २ ॐ अथैनं गार्गी वाचक्नवी पप्रच्छ याज्ञवल्क्येति होवाच यदिदꣳ सर्वमप्स्वोतं च प्रोतं च कस्मिन्नु खल्वाप ओताश्च प्रोताश्चेति वायौ गार्गीति कस्मिन्नु खलु वायुरोतश्च प्रोतश्चेत्यंतरिक्षलोकेषु गार्गीति । एवं सर्वेषु पर्यायेषु योज्यं । गंधर्वलोकेषु आदित्यलोकेषु चंद्रलोकेषु नक्षत्रलोकेषु देवलोकेषु इंद्रलोकेषु ब्रह्मलोकेषु स होवाच गार्गीति मातिप्राक्षीर्मा ते मूर्धा व्यपप्तत् ततो गार्गी उपरराम ।

पार्थिवं कठिनं सर्वमोतं प्रोतं द्रवे जले ॥ दधिपिंड इव क्षीरे जलं कुत्र तथा स्थितम् ॥९०॥ दीर्घतंतुवदोतत्वं तिर्यक्तंतोरिवेतरत् ॥ यद्वां-ऽतर्व्याप्तिरोतत्वं प्रोतत्वं तु बहिःस्थितिः ॥९१॥ जलस्य कारणं तेजस्तेजसो वायुराश्रयः ॥ श्रुत्यंतरादिदं ज्ञेयं वायोस्तु वियदाश्रयः ॥ ९२ ॥ भूम्यादिवियदंतानां भूतानामुत्तरोत्तरम् ॥ सूक्ष्मताव्या-पिते दृष्टे ताभ्यां कारणतेक्ष्यताम् ॥ ९३ ॥ पंचभूतेभ्य उत्पन्ना अस्मद्देहादयोऽखिलाः ॥ ब्रह्मांडांता इमे देहा भोग्यत्वाल्लोकसंज्ञकाः ॥९४॥ यथैकस्मादिक्षुरसादुत्तरोत्तरपाकतः ॥ गुडादीनि बहूनि स्युर्भूतेभ्योंऽडादयस्तथा ॥९५॥ नरगंधर्वमार्तंडचंद्रनक्षत्रदेवताः ॥ इंद्रो विराट् तदंडं चेत्येता भूतदशाः स्मृताः ॥९६॥ तत्र देहारंभ-दशास्तत्तन्नाम्ना समीरिताः॥स्थूलसूक्ष्मदशास्तासु कार्यकारणता क्रमात् ॥९७॥ पंचीकृतानां भूतानां सूक्ष्मतांऽडे समाप्यते ॥ एतावदेव तर्केण गम्यं न तु ततः परम् ॥९८॥ अंडारंभकभूतानामपंचीकृत-भूतजम् ॥ सूत्रं कारणमित्येतदागमेनैव गम्यते ॥ ९९ ॥ अचिंत्याः खलु ये भावा न तांस्तर्केण योजयेत् ॥ सूत्रांतर्याम्यक्षराणि तार्कि-का नानुमन्वते ॥२००॥ तर्काभासो भवेत्तेषु हेतुदृष्टांतवर्जनात् ॥ अन्यथा प्रतिपत्त्याऽतो मूर्धपातं मुनिर्जगौ ॥१॥ सप्तमब्राह्मणे तर्कं संत्यज्यागमभागतः ॥ ब्रह्मांडकारणं सूत्रमंतर्यामी च वर्ण्यते ॥२॥ सूत्रांतर्यामिणौ ज्ञातौ गंधर्वस्योपदेशतः ॥ तर्कान्नेति विवक्षित्वा कथं भुज्युवदुक्तवान् ॥ ३ ॥ सूत्रबद्धं दारुयंत्रं पुरुषो नर्तयेद्यथा ॥ सूत्रबद्धं जगत्तद्वदंतर्यामी नियच्छति ॥४॥ सूत्रांतर्यामिणौ सर्वज-गत्यनुगतावतः ॥ तौ विद्वानखिलं वेत्तीत्यतो ज्ञातव्यता तयोः

---

१ ॐ अथ हैनमुद्दालक आरुणिः पप्रच्छ याज्ञवल्क्येति होवाच ।

॥५॥ समष्टिव्यष्टिरूपेण भुज्युं प्रति य ईरितः ॥ स एव वायुः सूत्रात्मा तेन सर्वं जगद्धृतम् ॥६॥ ब्रह्मादिस्तंबपर्यंतं प्राणिकर्म पुरा कृतम् ॥ बाह्यात्मना परिणतं वर्तते कारणात्मनि ॥७॥ मूर्तामूर्त-ब्राह्मणोक्तवासना एतमाश्रिताः ॥ तदात्मकमिदं लिंगं यत्सप्तदशमुच्यते ॥८॥ विष्टब्धो वायुना देह इत्येतन्मरणे सति ॥ आवयोर्वपुषः कर्मायोग्यत्वादवसीयताम् ॥९॥ अपंचीकृतभूतानां कार्यं सूत्रमुदाहृतम् ॥ अंडारंभकभूतानि प्रोतान्योतानि चात्र हि ॥१०॥ सूत्रादप्यांतरं तत्त्वमंतर्याम्याख्यमुच्यते ॥ कार्यकारणभावोऽयमस्मिन्मुक्ते समाप्यते॥११॥भूमिष्ठोऽभ्यंतरो भूमेर्भूम्यज्ञातश्च भूवपुः॥ नियच्छति भुवं योऽतः स आत्माऽन्यस्य तेऽपि मे ॥१२॥ लोकं धत्ते स्वयं भूमिः स्वांतर्यामी स्वयं ततः ॥ इति स्वभाववादोऽयं भूमिष्ठत्वेन वार्यते ॥१३॥ अंतरत्वेन भूमिष्ठपर्वतादि निवर्त्यते ॥ भूदेवतानिवृत्तिः स्याद्यं न जानाति भूरिति ॥१४॥ नांतर्यामिविदेहत्वे साधनानामसंभवात् ॥ देहिता तु न दृष्टेति न दोषो भूवपुष्मतः ॥१५॥ भूदेवताया यो देहो देहोंऽतर्यामिणोऽपि सः ॥ देवस्य कर्मणेशस्य मायया चार्जितो यतः ॥ १६ ॥ न चैकदेहयोगेऽपि यंतृयंतव्यसंकरः ॥ बहिष्ठां देवतां भूमिमंतस्थेशो नियच्छति ॥१७॥ कार्योपाधिर्बहिष्ठः स्यात्कारणोपाधिरांतरः ॥ उपाधिमात्रतो भेदो वस्तुतस्तु न भिद्यते ॥१८॥ अतस्ते मेऽखिलस्यापि सोंऽतर्याम्यात्मतां गतः ॥ अमृतत्वान्न जीवत्वमात्मत्वेऽप्यस्य शंक्यते ॥१९॥ सार्वात्म्यं वक्तुमस्यैष बहूपाधिषु वर्णितः ॥ सर्वात्मा

---

१ याज्ञवल्क्यांतर्यामिणं ब्रूहीति यः पृथिव्यां तिष्ठन् पृथिव्या अंतरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमंतरो यमयत्येष त आत्मांतर्याम्यमृतः ।

शक्तियुक्तो यः सोंऽतर्यामीति गम्यताम् ॥२०॥ प्रत्यक् ध्वांतं चिदाभासं स्वकार्यनियमात्मकम् ॥ तदुपाधिर्नियंतैष परः प्रोक्तो न तु स्वतः ॥२१॥ सर्वज्ञः सर्वशक्तिश्च सर्वात्मा सर्वगो ध्रुवः ॥ जगज्जन्मस्थितिध्वंसहेतुरेष महेश्वरः ॥२२॥ नारायणाभिधो मंत्र एतस्यैवाभिधायकः ॥ पंचाक्षरेण मंत्रेण शिव इत्येष गीयते॥२३॥ हिरण्यगर्भं हैरण्यगर्भीया एवमूचिरे ॥ व्यासस्तत्तत्पुराणेषु तत्तद्रूपतयोचिवान् ॥२४॥ भूम्यादिदेवताः कस्मान्न स्वांतर्यामिणं विदुः ॥ अदृष्टोऽश्रुत[1] इत्याह कारणं तदवेदने ॥२५॥ दृष्टिश्रुतिमतिज्ञातिविषयत्वं चिदात्मनः ॥ उषस्तब्राह्मणे पूर्वं युक्त्या सम्यङ्निवारितम् ॥२६॥ मा गोचरातिवर्तित्वान्मातृमानादिसाक्षिणः ॥ द्रष्टुरन्यस्य चाभावान्न तं पश्यंति देवताः ॥२७॥ अदृष्टत्वाऽश्रुतत्वादि प्रत्यग्ध्वांतेऽपि संभवेत् ॥ तन्निवृत्त्यै श्रुतिर्द्रष्टा श्रोता मंतेत्यभाषत ॥२८॥ द्रष्टृत्वश्रोतृताद्यस्य दृष्टिश्रुत्यादिसाक्षिता ॥ अलुप्तचित्स्वभावत्वान्न विकारो मनागपि ॥२९॥ लोकसिद्धा नियम्यस्य जीवस्य द्रष्टृता तथा ॥ अंतर्याम्यपि चेद्द्रष्टा देहे भासेत तद्द्वयम् ॥३०॥ इति शंकानिवृत्त्यर्थं नान्योऽतोऽस्तीति भण्यते ॥ लोके जीवतया

---

१ योऽप्सु तिष्ठन्नद्भ्योऽतरो यमापो न विदुर्यस्यापः शरीरं योऽपामंतरो यमयत्येष आत्मातर्याम्यमृतः ३ योग्नौ ४ योंऽतरिक्षे ५ यो वायौ ६ यो दिवि ७ य आदित्ये ८ यो दिक्षु ९ यश्चंद्रतारके १० य आकाशे ११ यस्तमसि १२ यस्तेजसि १३ यः सर्वेषु भूतेषु १४ इत्यधिभूतम् ॥ अथाध्यात्मम् ॥ यः प्राणे तिष्ठन् १५ यो वाचि १६ यश्चक्षुषि १७ यः श्रोत्रे १८ यो मनसि १९ यस्त्वचि २० यो विज्ञाने २१ यो रेतसि ॥ १ एष त आत्मांतर्याम्यमृतोऽदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता नान्योतोऽस्ति द्रष्टा नान्योतोऽस्ति श्रोता नान्यो तोऽस्ति मंता नान्योतोऽस्ति विज्ञातैष त आत्मांतर्याम्यमृतोऽतोन्यदार्तं ततोद्दालक आरुणिरुपरराम ।

मूढैरंतर्याम्येव भाव्यते ॥३१॥ साधारणो यथा सूर्यो मां प्रत्येवेति पामरैः ॥ असाधारणरूपेण भाव्यते जीवता तथा ॥३२॥ बुद्धिस्थः पर एवात्मा जीवात्मेति निगद्यते ॥ बुद्ध्यागमापायसाक्षी नियंतेत्युच्यते परः ॥३३॥ सूत्रांतर्यामिणौ शास्त्रगम्यत्वेन प्रतिष्ठितौ ॥ अप्रतिष्ठिततर्केण गम्यमार्तमतोऽपरम् ॥३४॥ अष्टमब्राह्मणे ब्रह्मतत्त्वं सम्यङ्निरूपितम् ॥ सूत्रमंतर्यामिता च यत्रोतप्रोततां व्रजेत् ॥३५॥ पूर्वत्र गौतमोऽपृच्छत्सूत्रांतर्यामिवस्तुनी ॥ ओतप्रोतात्मतां गार्गी तयोरेवात्र पृच्छति ॥३६॥ अंडोर्ध्वाऽधोमध्यदेशान्कालं च व्याप्य तिष्ठति ॥ सूत्रमित्याहुराचार्या ओतं प्रोतं च कुत्रचित् ॥३७॥ अंडारंभकभूतानां न पृष्टा सूत्र ओतता ॥ सूत्रेण विधृतं पूर्वमिति पूर्वत्र निर्णयात् ॥३८॥ तार्किकत्वनिवृत्त्यर्थमाचार्योक्तिमुदाहरत् ॥ निःशेषदेशकालोक्त्या सूत्रे सर्वात्मतोदिता ॥३९॥ व्यक्तं सर्वं सूत्ररूपमव्यक्ते व्योमसंज्ञके ॥ ओतप्रोतं च विद्धीति प्राह पृष्टमनूद्य सः ॥४०॥ देशकालौ च सूत्रेंऽतर्भूतौ देशात्मकं ततः ॥ वियन्नाकाशमत्रेति सूचनायानुवादगीः ॥ ४१ ॥ बोद्धुं बोधयितुं चैतदव्यक्तं दुःशकं त्विति ॥ विस्मितः प्रणनामाऽसौ तमव्याकृतवादिनम् ॥ ४२ ॥ भूयोऽपि पृष्टमप्राक्षीत्प्रधानादिषु शंकया ॥ प्रधानादीन् जगद्धेतून्वादिनः स्थापयंति हि ॥४३॥ सावधारणमाकाशमेवेत्यन्यनिवृत्तये ॥ आहोत्तरं मूर्धपातं सूचयंस्तर्कनिर्णये॥४४॥ यद्वा तंतुष्विव पटः सूत्रं बहुषु संस्थितम् ॥ इत्याशंक्य पुनः प्रश्न एवकारो बहुत्वनुत् ॥४५॥ कस्मिन्खल्वयमाकाश ओतः प्रोतश्च ईर्यताम् ॥ अनोतत्वे स्वतंत्रत्वात्प्रधानत्वं प्रसज्जते ॥४६॥ सूक्ष्मत्वाद्दुर्वचः सूत्रं व्योम सूक्ष्मतरं ततः ॥ व्योमाश्रयः सूक्ष्मतमो

न वाग्गोचरमेत्यतः ॥ ४७ ॥ वक्ति चेन्निग्रहस्थानमवाच्यस्योक्तितो भवेत् ॥ अनुक्तौ वादिताहानिरिति गार्ग्या विवक्षितम् ॥ ४८ ॥ उक्तदोषद्वयास्पृष्टं प्रत्युत्तरमभाषत ॥ एतद्वा अक्षरं[1] गार्गि प्राहुस्तद्ब्राह्मणा इति ॥४९॥ एतच्छब्देन तस्याह प्रत्यक्त्वात्साक्षितामसौ ॥ प्रत्यक्तया तदैकात्म्यं स्वयमेव प्रतीयताम् ॥५०॥ न व्यावृत्तं विशेषेभ्यो नानुवृत्तं च गोत्ववत् ॥ अव्यावृत्ताननुगतं चैतन्यं केन वीक्ष्यताम् ॥५१॥ यस्मात्प्रसिद्धं नास्त्यन्यत्प्रसिद्धं यन्न कस्यचित् ॥ स्वप्रभत्वादसंगत्वाद्वैशब्दस्तत्प्रसिद्धये ॥५२॥ साक्षादित्यादिता पूर्वो योऽशनायादिना तथा ॥ यत्नादभिहितः प्रत्यक्तच्छब्देन स गृह्यते ॥५३॥ क्षराद्विरुद्धधर्मत्वादक्षरं ब्रह्म भण्यते ॥ कार्यकारणरूपं तु नश्वरं क्षरमुच्यते ॥५४॥ ध्वस्तात्मा ज्ञानतत्कार्याः प्रत्यग्याथात्म्यबोधतः ॥ त्यक्तसर्वेषणा अत्र ब्राह्मणा इति कीर्तिताः ॥ ५५ ॥ शास्त्रैकगम्यतासिध्यै वदंतीत्यभिधीयते ॥ ब्राह्मणास्तद्वदंतीति स्वापराधनिषेधगीः ॥ ५६ ॥ नावाच्यं वच्म्यहं किंतु वदंति गुरवोऽखिलाः ॥ इति वच्मि वचस्तेन वादिताऽपि न हीयते ॥५७॥ गुरवोऽपि कथं प्राहुरवाच्यमिति चेच्छृणु ॥ स्थूलादीनां निषेधेन लक्षयंत्यक्षरं बुधाः ॥५८॥ अभावशेषो नाशंक्यो निषेधावधिशेषणात् ॥ नाभावनिष्ठो लोकेऽपि निषेधः किमुताक्षरे ॥ ५९ ॥ अंतर्यामिणि बुद्धेऽथ सुशकं बोद्धुमक्षरम् ॥ प्रशासनेन लिंगेन सोंऽतर्याम्यवबुध्यताम् ॥६०॥ ईशितव्यार्थसंबंधादंतर्याम्येतमक्षरम् ॥ चैतन्याभा-

[1] स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदंत्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोवाय्वाकाशमसंगमरसमगंधमचक्षुष्कमश्रोत्रमवागमनोतेजस्कमप्राणममुखममात्रमनंतरमबाह्यं न तदश्नाति किंचन तदश्नोति एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचंद्रमसौ विधृतौ तिष्ठतः ।

समोहाख्यवर्त्मनैव न तु स्वतः ॥६१॥ एतस्य वा अक्षरस्य शासने सत्यदो जगत् ॥ स्याद्व्यवस्थितमर्यादं सूर्यचंद्रादिलक्षणम् ॥६२॥ विवादगोचरापन्ना यत्पूर्वा जगत्स्थितिः ॥ व्यवस्थितत्वाल्लोकस्य राजपूर्वा स्थितिर्यथा ॥६३॥ सूर्यचंद्रौ द्युभूर्लोकौ कालो नद्यो यथायथम् ॥ नियमेन प्रवर्तंते सा प्रवृत्तिर्व्यवस्थितिः ॥६४॥ धने दानेन नष्टेऽपि तत्फलप्रद ईश्वरः ॥ यतोऽस्ति तेन दातारं तं प्रशंसंति वैदिकाः ॥६५॥ नापूर्वफलदं तस्मिन्मानाभावात्फलं पुनः ॥ ईशादप्युपपन्नत्वान्नैवापूर्वस्य कल्पकम् ॥६६॥ सेव्याद्राज्ञः फलप्राप्तिर्दृश्यते न त्वपूर्वतः ॥ दानादिक्रियया सेव्यादीशात्तद्वत्फलं भवेत् ॥६७॥ देवता यागकर्तारं पितरः श्राद्धकारिणम् ॥ नाप्नुयुर्व्यवहारेऽस्मिन्यदि न स्यात्प्रशासिता ॥६८॥ होमयागतपांस्यज्ञैर्बहुकृत्वः कृतान्यपि ॥ विनाशफलदानीति शासनं तत्प्रशासितुः ॥६९॥ अज्ञानमात्रतो बंधो ज्ञानमात्रेण मुक्तता ॥ इत्याश्चर्याणि सर्वाणि कल्पयंतीश्वरास्तिताम् ॥७०॥ विवादशंकाऽपीशेऽस्मिन्नसंभाव्येति दर्शयन् ॥ प्रशासनं लिंगरूपं प्रपंचितमनेकशः ॥७१॥ यदप्रबोधात्कार्पण्यं ब्राह्मण्यं यत्प्रबोधतः ॥ तदक्षरं प्रबोद्धव्यं यथोक्तेश्वरवर्त्मना ॥७२॥ अक्षरस्य प्रशा-

---

१ द्यावापृथिव्यौ विधृतौ तिष्ठतः निमेषा मुहूर्ता अहोरात्राण्यर्धमासा मासा ऋतवः संवत्सरा इति विधृतास्तिष्ठंति । एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योन्या नद्यः स्पंदंते ददतो मनुष्याः प्रशंसंति यो वा तदक्षरं गार्ग्यविदित्वाऽस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यंतवदेवास्य तद्भवति । २ यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणोऽथ य एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात्प्रैति स ब्राह्मणः तद्वा एतदक्षरं गार्ग्यदृष्टं दृष्टमश्रुतं श्रुतममतं मतमविज्ञातं विज्ञातृ नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मंतृ नान्यदतोऽस्ति विज्ञात्रेतस्मिन्खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति ।

स्तृत्वं स्वमोहाभासकल्पितम् ॥ न स्वाभाविकमित्येतद्दृक्त्वदृष्टादिवाक्यतः ॥७३॥ मा गोचरातिवर्तित्वाददृष्टं स्यात्तदक्षरम् ॥ अभावत्वनिषेधार्थं द्रष्टृक्षरमितीर्यते ॥७४॥ कूटस्थदृक्त्वं द्रष्टृत्वं न दृश्येदृष्टिकर्तृता ॥ ओतप्रोतगिराऽशेषदृश्यवस्तुनिराकृतेः ॥७५॥ उक्तद्रष्टृतिरेकेण दृश्यं नास्ति यथा तथा ॥ जीवद्रष्टृनिषेधार्थं नान्यदित्याद्युदीरणम् ॥७६॥ विजातीयसजातीयवस्त्वंतरनिषेधतः ॥ कूटस्थमेकं चैतन्यं सिद्धं वस्त्वक्षरं परम् ॥७७॥ एतस्मिन्नक्षरे गार्गि स्रजि क्लृप्तफणींद्रवत् ॥ ओतः प्रोतश्च निःशेष आकाशः कारणात्मकः ॥७८॥ अक्षरं स्वात्मसंमोहात्कारणत्वं निगच्छति ॥ तथा कार्यत्वमप्येतन्निरवद्यं तदेकलम् ॥७९॥ सर्वस्याक्षरमात्रत्वात्कृत्स्ने ज्ञेयसमाप्तितः ॥ न ज्ञेयं विद्यते किंचिन्नाप्यध्यस्तं तथा [1]तमः ॥८०॥ नवमन्त्राह्मणे देवनिर्णयस्तदुपासनम् ॥ अष्टधा पंचधा चौपनिषदश्चोच्यते क्रमात् ॥८१॥ सूर्यचंद्रादयो देवाः शासितव्या उदीरिताः ॥ तेषां विस्तार आनंत्यं संक्षेपस्त्वेकदेवता ॥८२॥ त्रयश्चेत्यादिभिर्लक्ष्या वहुशब्दैरनंतता ॥ सुषुप्तिप्रलयावस्थः कारणात्मैकदेवता ॥८३॥ नानात्वैकत्वरूपाभ्यां तिष्ठति प्राणदेवता ॥ नियंतव्यनियंतृत्वसंबंधस्य प्रसिद्धये ॥८४॥ पृथिव्येवेत्यादिवाक्यादष्टधोपासनेरिता ॥ किं देवेत्यादिवाक्येन पंचधोपासनं श्रुतम् ॥८५॥ एतावदेव शाकल्यो वेत्ति मायामयं तु तत् ॥ याज्ञवल्क्यः स इत्यादिवस्त्वनूद्याऽथ पृष्टवान् ॥८६॥ देवविस्तारसंक्षेपावष्टधा पंचधा च यत् ॥ उपास्यमुक्तं तत्सर्वं नेति नेतीत्यपोह्यते ॥८७॥ इतिशब्देन निर्दिष्टे दृश्ये तस्मिन्नपोहिते ॥

---

१ सा होवाच ब्राह्मणा भगवंतस्तदेव बहु मन्येध्वं तदस्मान्नमस्कारेण मुच्येध्वं न वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेतेति ततो ह वाचक्नव्युपरराम।

योऽवशिष्टः स आत्माऽस्य दृश्यस्यात्मवतो मतः ॥८८॥ आत्मात्मवत्वसंबंधो नान्यो दृग्दृश्ययोरिति ॥ मत्वात्मशब्दो दृग्वस्तुन्यवाच्येऽपि प्रयुज्यते ॥८९॥ ननु ब्रह्माधिकारेऽस्मिन्कथमात्मेति वर्ण्यते ॥ नैष दोषोऽतिरेकेण नात्मनो ब्रह्मता यतः ॥९०॥ ग्राह्यत्वं शीर्णता संगो बंधो भीतिश्च हिंसनम् ॥ जाड्याज्जडस्य धर्माः स्युर्न ते संत्यात्मवस्तुनि ॥ ९१ ॥ कार्यधर्माननतीत्यैतांस्तद्धेत्वज्ञाननिह्नुतेः ॥ अपूर्वानपरः पूर्ण आत्मा स्वात्मन्यवस्थितः ॥९२॥ इति तत्त्वमनूद्यास्य सृष्टिसंहारहेतुताम् ॥ तथैवोपनिषद्वेद्यमसंगत्वं च पृष्टवान् ॥ ९३ ॥ आत्मा निरूह्य प्रत्यूह्य पुरुषान्योऽत्यवर्तत ॥ तमौपनिषदं ब्रूहि मूर्धपातस्तु तेऽन्यथा ॥९४॥ योऽनूदितो नेति नेति सच्चिन्मात्रो ह्यविक्रियः ॥ उक्तौ पुरुषनिर्वाहप्रतिवाहौ तु मायिकौ ॥९५॥ सृष्टिरष्टविधोपास्यरूपा निर्वाह उच्यते ॥ प्रतिवाहस्तु संसारो दिग्देवद्वारतो हृदि ॥९६॥ वस्तुवृत्तेन निःशेषकार्यकारणवर्जनम् ॥ तस्यातिक्रांतिरुद्दिष्टा स चोपनिषदि श्रुतः ॥९७॥ कर्मकांडविरोधित्वान्नैवायं श्रूयते क्वचित् ॥ ऐकात्म्यवस्तुविज्ञानं कर्मभिर्हि विरुध्यते ॥९८॥ य औपनिषदस्तस्य विज्ञानानंदरूपता ॥ दातृता भोगमुक्त्योश्च वक्तव्येत्युत्तरा श्रुतिः ॥९९॥ महाप्रलयसंपत्तौ जगतः पुनरुद्भवे ॥ कारणं पृच्छते वृक्षसर्वसाधर्म्यपूर्वकम् ॥२००॥ वृक्षः कांडरुहो बीजरुहश्चेति द्विधा तयोः ॥ समः कांडरुहेणैष रेतसो योऽभिजायते ॥ १ ॥ न पृच्छ्यतेऽतिस्पष्टत्वात्तदवांतरकारणम् ॥ किंत्वस्पष्टमशेषस्य पृच्छ्यते मूलकारणम् ॥ २ ॥ अन्वयव्यतिरेकाभ्यां बीजाख्यान्मूलकारणात् ॥ दृष्टा वृक्षजनिस्तद्वत्कस्मान्मूलाज्जगज्जनिः ॥३॥ नित्यजातस्वभावत्वं न मंतव्यं यतोऽमृतः ॥ पुनः पुनर्जायते

स्यात्कृतनाशादिरन्यथा ॥४॥ को न्वेनं जनयेन्मर्त्यमित्युक्ता न विदुर्द्विजाः ॥ जित्वा तान्याज्ञवल्क्यस्तु गोसहस्रं गृहीतवान् ॥५॥ मुनिपृष्टं जगन्मूलं मुमुक्ष्वनुजिघृक्षया ॥ आह विज्ञानमानंदं ब्रह्मेति श्रुतिरादरात् ॥६॥ विज्ञानमिति चैतन्यं न क्रिया नापि तत्फलम् ॥ न कारकं न चाभावः क्रियादेः किंतु भासकम् ॥७॥ निर्धूताशेष-दुःखौघहेतुत्वात्सुखमेव तत् ॥ अथैष परमानंदो यो वै भूमेति शास्त्रतः ॥८॥ अव्यावृत्ताननुगतभास्वद्विज्ञानमात्रतः ॥ निरवद्या-न्वयत्वात्तत्साक्षाद्ब्रह्मेति भण्यते ॥९॥ तदेवाविद्यया शक्त्या भोग-मोक्षप्रदात्ट हि ॥ अनुगृह्णातु तद्भूयो विद्यातीर्थमहेश्वरः ॥ ३१० ॥ इति श्रीमद्विद्यारण्यमुनिविरचिते अनु० आश्वलायनादिमुनिबो-धाख्यो नाम सप्तदशोऽध्यायः ॥१७॥

षष्ठाध्याये याज्ञवल्क्यो जनकायोपदिष्टवान् ॥ उपास्तिं तत्त्व-विद्यां तु संग्रहाद्विस्तरादपि ॥१॥ ध्यानादिहैव देवः सन्मृत्वा तद्दे-वताऽत्यये ॥ प्रथमब्राह्मणे प्रोक्तं चतुष्पाद्ब्रह्मचिंतनम् ॥२॥ वागाद्या देवतास्तासामाधारस्तत्तदिंद्रियम् ॥ अव्याकृतं च नामेति पादाश्च-त्वार ईरिताः ॥३॥ असमाप्तेः पुमर्थस्य न मुख्यमनुशासनम् ॥ बद्धत्तां याज्ञवल्क्योऽतो नाग्रहीद्गुरुदक्षिणाम् ॥४॥ द्वितीये ब्राह्मणे जाग्रत्स्वप्नसुप्तिमुखान्निजम् ॥ आत्मानं शास्त्यतो राजा यथाविष्णु-प्रसन्नवान् ॥५॥ उक्तोपासनतः प्राप्यो देवभावः पुरोदितः ॥ देव-त्वान्मुच्यमानेन प्राप्यं पृच्छत्यसौ मुनिः ॥६॥ गंतव्यं तु न जानामी-त्यविद्यां स्वात्मनि स्थिताम् ॥ प्रकटीकुर्वतो राज्ञ इंधतत्त्वमुपादि-शत् ॥७॥ इंधतेऽहर्निशं यस्मादिंधनामा ततः पुमान् ॥ वीर्यवद्द-क्षिणं चक्षुः श्रौतो वाक्तिशयोऽत्र हि ॥८॥ परोक्षनामव्याजेन पर-

मैश्वर्यवाचिनम् ॥ इंधशब्दं प्रयुंजानं इंधस्याहेश्वरात्मताम् ॥ ९ ॥ दक्षिणाक्षिणि चैतन्यं पुरुषो वामचक्षुषि ॥ चैतन्यं स्त्रीति भेदोऽयं कल्पते सुखबुद्धये ॥१०॥ उक्ता जाग्रदवस्थैवमिंद्रियव्यवहारकृत् ॥ दंपत्योः संगमः स्वप्नो हार्दाकाशोऽथ भण्यते ॥११॥ संभूयस्तुतिरत्रेति संस्तवो हृदये सुषिः ॥ अनिष्टान्नरसो रक्तपिंडो यः सोऽन्नमेतयोः ॥१२॥ हृद्यंतः शतनाडीनां पुंजं प्रावरणं विदुः ॥ स्वप्नाज्जागरणप्राप्त्यै मार्गो नाड्यूर्ध्वगामिनी ॥१३॥ यस्मादन्नरसः केशसहस्रांशेन संमितैः ॥ नाडीभेदैः स्वप्नदृश्यं याति सूक्ष्मतरस्ततः ॥१४॥ स्वप्नावस्था समाप्ताऽथ तस्य प्राचीति वाक्यतः ॥ सुषुप्तिरुच्यते तत्र युक्ता सर्वदिगात्मता ॥१५॥ साश्रयैः करणैर्हीनो ग्रस्ताध्यात्माधिदैवतः ॥ सुषुप्तावेक एवास्ते प्रज्ञानघनविग्रहः ॥१६॥ इंधतैजससौषुप्तैर्विराट्सूत्रेश्वरा अपि ॥ संलक्षिता अथैतेषां तत्त्वमात्मोपदिश्यते ॥१७॥ विराडिंधादिभिर्भेदैरभिन्नो योऽवभासते ॥ स एष [1]नेति नेत्यात्मा न कार्यं नापि कारणम् ॥ १८ ॥ तेनैव ह्यात्मनाऽशेषं ध्वांतजं तत्तथा जगत् ॥ जग्ध्वा नेत्यात्मना विद्वान्पूर्णदृष्ट्याऽवशिष्यते ॥१९॥ गंतव्यमुपदिश्यैवं प्राप्तोऽस्यभयमित्यृषिः ॥ ऊचे बोधस्ततः प्राप्तः प्राप्स्यसीत्यन्यथा वदेत् ॥ २० ॥ ज्ञानेन[2] सदृशीमन्यामपश्यन् गुरुदक्षिणाम् ॥ अभयं त्वेति वचसा दक्षिणामाशिषं ददौ ॥२१॥ उत्तमा दक्षिणैषाशीर्मध्यमा तु नमस्क्रिया ॥ स्वभूमिवपुषोर्दानं वित्तशाठ्यनिवृत्तये ॥ २२ ॥ तृतीय-

---

१ स एष नेति नेत्यात्माऽगृह्यो नहि गृह्यतेऽशीर्यो नहि शीर्यतेऽसंगो नहि सज्यतेऽसितो न व्यथते न रिष्यत्यभयं वै जनक प्राप्तोऽसीति स होवाच याज्ञवल्क्यः। २ स होवाच जनको वैदेहोऽभयं त्वागच्छतायाज्ञवल्क्य यो नो भगवानभयं वेदयसे नमस्तेऽस्त्विमे विदेहा अयमहमस्मि।

ब्राह्मणे स्वप्नसुषुप्त्योरतिविस्तृतिः ॥ क्रियतेऽतो हि दृष्टांतौ परलोक-विमोक्षयोः ॥२३॥ देहादिव्यतिरिक्तत्वस्वप्रभत्वमसंगता ॥ स्वप्न-प्रसंगतस्त्वेतत्रयं मंत्रः प्रपंच्यते ॥२४॥ अद्वैतत्वं दृष्ट्यलोप आनं-दैकस्वभावता ॥ इदं त्रयं सुषुप्तस्य प्रसंगेनोपपद्यते ॥२५॥ वरदानेन संवादमिच्छंतं तमशंकया ॥ आदौ राजेष्टमप्राक्षीत्प्रत्यग्ज्योतिर्बुभु-त्सया ॥२६॥ देहेंद्रियादिसंघातः पुमान्किं ज्योतिरुच्यताम् ॥ उप-वेशनगत्यादि न युक्तं ज्योतिषा विना ॥२७॥ किं संघातगतं ज्योतिः किं वा संघातिरेकि तत् ॥ अतिरिक्तत्वमादत्ते आदित्या-देरुदाहृतेः ॥२८॥ रविसोमाग्निशब्दादिज्योतींष्युक्तानि जागरे ॥ निदर्शनतया ज्योतिस्तैः स्वप्नेऽप्यनुमीयताम् ॥२९॥ स्वाप्नदेहव्यवहृ-तिर्भिन्नज्योतिःपुरःसरा ॥ व्यवहारत्वतो जाग्रद्व्यवहारो यथा तथा ॥३०॥ सुप्तौ च पुनरुत्थानव्यवहारस्य कारणम् ॥ अस्ति ज्योति-रिति ज्ञात्वा व्यवहारं स पृष्टवान् ॥३१॥ स्वप्रकाशस्वरूपत्वाद्व्य-वहारो ह्यतिस्फुटः ॥ तथाऽप्यविद्यया छन्नः सोऽस्पष्ट इव वर्तते ॥३२॥ एतादृश्या अविद्याया विचारेण निवृत्तये ॥ आत्मैव ज्योति-[1]रस्येति प्राह स्वप्रावभासकम् ॥३३॥ भास्यं स्वप्नसुषुप्त्यादि यस्मि-न्भानं प्रकल्पितम् ॥ तद्भानं तत्स्वरूपत्वादात्मशब्देन भण्यते ॥३४॥ आत्मा विद्या तद्युत्थं वा पराग्धीरवगाहते ॥ प्रत्यग्बुध्यावगाह्योऽत आत्माऽहं भामि केवलः ॥३५॥ आत्मैवेत्येवकारेण स्वप्नदृश्येष्वना-त्मसु ॥ ज्योतिष्ट्वशंका व्यावृत्ता वासनामयवस्तुषु ॥३६॥ अस्येति वासनारूपो दृश्यो देहादिरुच्यते ॥ भास्यभासकसंबंधः षष्ठ्योक्तो

---

१ आत्मैवास्य ज्योतिर्भवतीत्यात्मनैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येति ।

वासनात्मनोः ॥३७॥ ज्योतिष्ट्वं भासकत्वं स्याच्चिदाभासमुखेन तत् ॥ उपपन्नमसंगस्य भान्वादिवदनुग्रहात् ॥ ३८ ॥ भान्वादयः प्रभाद्वारा चक्षुराद्यनुगृह्यते ॥ तथैवात्मानुगृह्णीते चिदाभासेन शेमुषी[1] ॥३९॥ अविद्यान्वयवद्बुद्धेश्चिदाभासान्वयस्तथा ॥ अस्ति तद्व्यतिरेकेण बुद्धेः परिणतिर्वृथा ॥४०॥ चिदाभासविहीनस्य चित्तस्य परिणामतः ॥ न किंचिद्भासते वस्तु साभासा धीस्ततः सदा ॥४१॥ साभासपरिणामेन दुःख्यस्मीत्यपि धीर्भवेत् ॥ तथा साभासमज्ञानं न वेद्मीत्यनुभूयते ॥४२॥ अन्यथात्मनि कौटस्थ्याद्बुद्धौ चैतन्यवर्जनात् ॥ सर्वोऽपि व्यवहारः स्यादंधकारप्रवृत्तवत् ॥४३॥ चिदाभासानुग्रहोऽत्र ज्योतिष्ट्वं भानुवन्मतम् ॥ न तु रव्यादिवच्चक्षुर्ग्राह्यभास्वररूपता ॥४४॥ आदित्यादिरनात्माऽस्य सिध्यत्यक्षादिमानतः ॥ मात्रादिसिद्धिदस्यास्य स्वतः सिद्धेर्न मेयता ॥४५॥ नाप्रमेयत्वमात्रेण शशशृंगादितुल्यता ॥ अनन्यानुभवेनास्य विशदं स्फुरणं यतः ॥४६॥ स्यात्स्वप्नव्यवहारोऽयमात्मना ज्योतिषा दृशा ॥ देहादिव्यतिरिक्तत्वमेवं सिद्धं चिदात्मनः ॥४७॥ आत्मैवास्येति देहादेः स्वरूपत्वेन चिच्छ्रुता ॥ चितो देहादिभेदोऽपि भान्वादिवदुदीरितः ॥ ४८ ॥ पूर्वोत्तरविरुद्धार्थं मत्वा पप्रच्छ भूपतिः ॥ बहवोऽर्थाः समीक्ष्यंते आत्माऽत्र कतमो वद ॥४९॥ पिंडस्तावदिहैकोऽर्थो द्वितीयो लिंगसंज्ञितः ॥ चिद्बिंबताऽवधिश्चान्यश्चतुर्थो नेति नेति यः ॥५०॥ देहादिभेदमाश्रित्य योऽयमित्युत्तरं जगौ ॥ अधिष्ठानारोप्यभाव आत्माऽस्येति विवक्षितः ॥५१॥ विचारदृष्ट्याऽधिष्ठानमेवास्याध्यस्तवस्तुनः ॥ तथापि जाड्यचैतन्यभेदोऽप्यस्तीह लौकिकः ॥५२॥

---

१ बुद्धिः ।

एवं सत्यविबोधः स्याद्भेदाभेदार्थवाक्ययोः ॥ योऽयं[1]मित्युत्तरे शब्द-द्वयमेवं विविच्यताम् ॥५३॥ यः पृष्टः स्वपराग्वृत्तिप्रमा मेयातिलंघितः ॥ प्रत्यङ्मुखेन मानेन त्वयमित्युपदिश्यते ॥५४॥ परांचीति च मंत्रोक्तिः साक्षादात्मेति च श्रुतिः ॥ पराङ्मात्रप्रमेयत्वमात्मनो विन्यवारयत् ॥५५॥ कुंभाकारेण कुंभार्थो यथा प्रत्यक्ष ईक्ष्यते ॥ ध्याकारेण तथा प्रत्यङ्ङात्माकारेण गृह्यते ॥५६॥ अयमित्यभिधायोग्यो लोके देहोऽपि वीक्ष्यते ॥ विज्ञानमय इत्युक्त्या स्थूलदेहो निवर्त्यते ॥५७॥ विज्ञायतेऽनेन सर्वमिति विज्ञानशब्दतः ॥ धीरुक्ता तन्मयत्वं तु तत्प्राचुर्यं विवक्षितम् ॥५८॥ आचख्युर्मयटं केचिद्विकारार्थे न तच्छुतम् ॥ अनिर्मोक्षो विकारार्थे प्रायोऽर्थस्तूपपद्यते ॥५९॥ बुद्धिविज्ञानसंपृक्तश्चंद्रसंसक्तराहुवत् ॥ प्रमीयते ततः प्रत्यग्विज्ञानमय उच्यते ॥६०॥ द्रष्टृत्वाद्यभिसंबंधः कारकस्यापि सर्वदा॥ धीविज्ञानकृतोऽतोऽपि विज्ञानमय उच्यते ॥६१॥ सर्वार्थकरणं बुद्धिद्वारमात्रं ततोऽपरम् ॥ धीर्विज्ञानमयस्तस्माच्चिदाभासैकवर्त्मना ॥६२॥ प्राणबुद्ध्यविनाभूता इति प्राणमयोऽप्यतः ॥ प्राणात्मवादः संप्राप्तः प्राणेष्विति निवार्यते ॥६३॥ दशेंद्रियाणि मरुतः पंच च प्राणशब्दिताः ॥ प्राणेषु योऽर्थोऽनुगतः स आत्मेत्यवधार्यताम् ॥६४॥ धीरेवात्मेत्यपाकर्तुं हृदीति श्रुतिरभ्यधात् ॥ स्वार्थबुद्धौ य आभाति स आत्मा बुद्धिवृत्तिदृक् ॥६५॥ हृदीत्याधारनिर्देशाद्धीस्थवृत्तिषु चात्मता ॥ प्रसक्ता तन्निवृत्त्यर्थमंतरित्युपदिश्यते ॥ ६६ ॥ परागर्थानुसारिण्यो यतो धीवृत्तयस्ततः ॥ प्रत्यक्त्ववाचकेनांतःशब्देनेता निवर्तिताः ॥६७॥ जाड्यमात्मन इच्छंति कणभुङ्मत-

---

१ कतम आत्मेति योयं विज्ञानमयः प्राणेषु हृद्यंतर्ज्योतिः पुरुषः ।

जीविनः ॥ तेषां विप्रतिषेधार्थं ज्योतिरित्यभिधीयते ॥६८॥ जडबुद्ध्याद्युपादानं तमस्तस्यावभासकम् ॥ सकृद्विभातं चिन्मात्रं ज्योतिरात्मेति भण्यते ॥६९॥ अचेतनोऽपि बुद्ध्यादिश्चेतनावानिवेक्ष्यते ॥ यस्य संनिधितस्तस्य चिज्ज्योतिष्ट्वमिति स्फुटम् ॥७०॥ आत्मच्छायं पयोऽशेषं यथा मारकतो मणिः ॥ परीक्षणाय प्रक्षिप्तः कुर्यादात्मा तथैव हि ॥७१॥ ज्योतिरात्मा चितिच्छायं प्रथमं कुरुते तमः ॥ तमोयोगेन धीस्तद्वद्धीयोगादिंद्रियं तथा ॥७२॥ अक्षयोगात्तथा देह एवमेतच्चिदात्मवत् ॥ भासंते ते स्वतः पुंसा प्रत्यगात्मत्वविभ्रमः ॥७३॥ तमेव भांतमात्मानमनुभात्यखिलं जगत् ॥ इति श्रुत्यंतरे स्पष्टमुक्तं ज्योतिष्ट्वमात्मनः ॥७४॥ आत्मेत्येवं प्रबुद्धेऽस्मिन् ज्योतिषि ध्वांतनाशतः ॥ सर्वस्यैवात्मयाथात्म्यादात्मा पुरुष उच्यते ॥७५॥ आत्माज्ञानसमुच्छित्तौ तज्ज्ञस्य न हि वस्तुनः ॥ प्रत्यग्रूपात्पृथग्रूपं संभाव्यं केनचित्कचित् ॥७६॥ पूर्णत्वात्पुरुषः सोऽयं ज्योतिरात्मेति भण्यते ॥ पूर्णस्य लोकसंचारः कथं स्यादिति भण्यताम् ॥७७॥ यः पूर्णः स समा[१]नः सन् बुद्ध्यालोकावुभावपि ॥ संप्राप्तप्रतिपत्तव्यावनुसंचरति क्रमात् ॥७८॥ किं पुनः स्यात्समानत्वमात्मबुद्ध्योस्तदुच्यते॥ विवेकानुपलंभेन तादात्म्यं रज्जुसर्पवत् ॥७९॥ सम एव धियालोकौ संचरत्येष न स्वतः ॥ अतः संसारमिथ्यात्वं ध्यायतीवेति वर्ण्यते ॥८०॥ ध्यायंत्यां ध्यायतीवात्मा चलंत्यां चलतीव च ॥ बुद्धिस्थे ध्यानचलने कल्पेते बुद्धिसाक्षिणि ॥८१॥ आलोके व्यंजके यद्वदभिव्यंग्यघटाकृतिः ॥ आरोप्यते तथा बौद्धः संसारो

---

१ समानः सन्नुभौ लोकावनुसंचरति ध्यायतीव लेलायतीव स हि स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणि ।

बुद्धिसाक्षिणि ॥ ८२ ॥ ध्यानादीनामवस्तुत्वे स हि स्वप्न इति श्रुतिः ॥
हेतुमाह स आत्मायं स्वप्नो भवति धीवशात् ॥ ८३ ॥ बुद्धिजागरणे
यद्वज्जागर्मीत्यभिमन्यते ॥ बुद्धिः स्वप्ने तथा स्वप्नरूपत्वमभिमन्यते
॥८४॥ जाग्रद्भोगमिमं लोकं स्वप्नो भूत्वाऽतिवर्तते ॥ वासनाराशि-
साक्षित्वं स्वाप्नं भोगं तदाऽप्नुयात् ॥८५॥ अविद्याकामकर्माख्यमृत्यो
रूपाण्यतीत्य सः ॥ जाग्रद्देहेंद्रियादीनि तिष्ठंति ज्योतिरात्मना
॥८६॥ तस्मात्स्वाभाविको नैव क्रियाध्यानादिलक्षणः ॥ लोकद्वया-
नुसंचारः किंत्वौपाधिक इष्यताम् ॥८७॥ जाग्रद्देहादिकं मृत्यो रूपं
स्वप्नेऽतिवर्तताम् ॥ न जन्मांतरमित्येवमाशंक्योक्तं स वा[1] इति ॥८८॥
युज्यते जायमानः सन्दुःखैरात्मैष ऐहिकैः ॥ मृतो वियुज्यते भाविज-
न्मस्वप्नसमं ततः ॥८९॥ जन्मात्र नासतः सत्त्वं किंतु देहेन संयुतिः ॥
प्रादुर्भावो जनेरर्थः सत एव स युज्यते ॥९०॥ मृतिः प्राणवियोगः
स्यान्नतु नाशः सतो मतः ॥ मृङ्प्राणत्याग इत्युक्त्या स्वयं नष्टः कथं
त्यजेत् ॥९१॥ इमं लोकं परं चायं जाग्रत्स्वप्नप्रवाहवत् ॥ सदा
भजति तेनास्य सिद्धा देहादिभिन्नता ॥९२॥ लोकायताः परं लोकं
नेच्छंत्यन्ये तु मन्वते ॥ त्रीँल्लोकान्स्वप्नसंयुक्तांस्ततस्तस्येति वेत्त्यसौ[2]
॥९३॥ अयोगं परलोकस्य वारयत्येवकारतः ॥ संध्यत्वेन तृतीयत्वं
स्वप्नलोकस्य वार्यते ॥ ९४ ॥ भोगभावात्तृतीयत्वमुच्यते चेत्तथोच्य-
ताम् ॥ वस्तुतो न तृतीयत्वं धर्माधर्मप्रसंगतः ॥९५॥ देशयोरुभयोः
संधिर्न हि देशांतरं यथा ॥ लोकयोरुभयोः संधिस्तथा लोकांतरं न

१ स वा अयं पुरुषो जायमानः शरीरमभिसंपद्यमानः पाप्माऽभिसंसृज्यते स उत्क्रामन् म्रियमाणः पाप्मनो विजहाति। २ तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इदं च परलोकस्थानं च संध्यं तृतीयँ स्वप्नस्थानं तस्मिन्संध्ये स्थाने तिष्ठन्नेते उभे स्थाने पश्यतीदं च परलोकस्थानं च।

हि ॥९६॥ इमं लोकमिव स्वप्ने परलोकं स पश्यति ॥ अतः प्रत्यक्षतोऽस्तित्वं परलोकस्य गम्यताम् ॥९७॥ अतीतजन्मवृत्तांतं बाल्ये प्रायेण पश्यति ॥ ऐहिकं यौवनेंऽते तु तपस्वी भावि वीक्ष्यते ॥९८॥ आक्रम्य यादृग्देहादिभाविजन्मानि वीक्ष्यते ॥ स्वप्नेऽपि तादृगाक्रम्य सुखदुःखानि पश्यति ॥ ९९ ॥ बहुजन्मसु संचाराद्देहादिव्यतिरिक्तताम् ॥ निरूप्याथ स्वप्नभत्वं स यत्रेति निरूप्यते ॥१००॥ स यदा वासनामस्य जाग्रल्लोकस्य सर्वशः ॥ आदाय शेते विज्ञेया तस्य स्वप्नभता तदा ॥१॥ स यत्र प्रस्वपित्यत्र स्वयंज्योतिः पुमानिति ॥ योऽजामस्येत्यादिना तु स्वापशब्दार्थ उच्यते ॥ २ ॥ न सुषुप्तिरिह स्वापः किंतु स्वप्नो विवक्षितः ॥ स जाग्रद्वासनाजन्यप्रपंचप्रतिभासकः ॥३॥ जाग्रल्लोकस्तु सर्वावानशेषमवतीत्यतः ॥ अवितृत्वं च सप्तान्नब्राह्मणे प्राक् प्रपंचितम् ॥४॥ यद्वाऽध्यात्मादिभेदोऽयं सर्वोऽत्रास्तीति सर्ववान् ॥ तस्य सर्वावतोऽशेषवासना स्वप्नसृष्टिकृत् ॥५॥ आदाय वासनां स्थूले देहे हित्वाऽभिमंतृताम् ॥ सूक्ष्मेऽभिमानं निर्माय पश्यन्नेषोऽभि मन्यते ॥६॥ हननं च विनिर्माणं जीवे कर्मवशादिति ॥ विवक्षुः स्वयमित्याह दैवं कर्मानुसार्यतः ॥७॥ स्वेन भासेति शब्दाभ्यां स्वकीया वासनोच्यते ॥ स्वरूपभूता चित्स्वेन ज्योतिषेति विवक्षिता ॥८॥ इत्थंभावे तृतीया स्याद्वासनाज्योतिषोस्ततः ॥ भास्यभासकरूपेण स्थितिः स्वप्न इतीर्यते ॥ ९ ॥ अत्रान्यज्योतिषोऽभावात्स्वयंज्योतिः पुमान्भवेत् ॥ न ज्योतिष्ट्वं वासनाया भास्यत्वेन परिक्षयात् ॥१०॥ आत्मबुद्धिमनश्चक्षुरालोकविषयैर्युते ॥ न जागरे स्वयं ज्योतिर्विवेक्तुं शक्यते नृभिः ॥११॥ न सुषुप्तेऽपि तच्छक्यं भास्याभिव्य-

---

१ स यत्र प्रस्वपित्यस्य लोकस्य सर्वावतो मात्रामादाय स्वयं विहत्य स्वयं निर्माय ।

त्त्वभावतः ॥ स्वप्ने तु भास्यमस्त्येकं ततो ज्योतिर्विविच्यते ॥१२॥
स्वप्ने जागरवद्द्रष्टा मातृमानादयस्ततः ॥ दुर्विवेचत्वमाशंक्यं न तत्रेति[1]
निषिध्यते ॥१३॥ रथाश्वादीनि वस्तूनि जाग्रत्कर्मक्षये सति ॥ लीयंते
वासनास्तेषां तिष्ठंति स्वप्नसिद्धये ॥१४॥ लोकसिद्धमुपादानं निमित्तं
वा न विद्यते ॥ स्वप्ने तेन रथादीनां मिथ्यात्वं युज्यतेतराम् ॥१५॥
असंगस्यापि संभाव्यमविद्याकामकर्मभिः ॥ स्रष्टृत्वमित्यभिप्रेत्य स
हि कर्तेत्यवोचत ॥१६॥ ब्राह्मणोक्तार्थदार्ढ्यार्थं श्रुतिर्मंत्रानुदाहरत् ॥
स्वयंज्योतिष्ट्वदेहादिभिन्नत्वे तेष्वतिस्फुटे ॥१७॥ आराममेव मायेत्थं
स्वप्ननिर्माणलक्षणम् ॥ पश्यंति जंतवस्तस्य न तं पश्यति कश्चन ॥१८॥
च्चिकित्सकप्रसिद्ध्यापि सुप्तो देहाद्विभिद्यते ॥ द्रुतं[2] न बोधयेत्सुप्तमिति
प्राहुश्चिकित्सकाः ॥१९॥ देहान्यत्वस्वप्रभत्वे असोढ्वा स्वप्नमप्यमुम् ॥
अपह्नुवानाश्चार्वाकास्तस्याहुर्जागरात्मताम् ॥२०॥ सदसत्स्वप्नपार्थक्यं
प्रसिद्धं लोकशास्त्रयोः ॥ अत्रायं पुरुषस्तेन स्वप्रभश्चेतनः पृथक् ॥२१॥
मोदन्यासौ कर्मकार्यौ दृष्टौ स्वप्नेऽपि चात्मनः ॥ इत्याशंक्य स[3] वा
एष इति कर्म विविच्यते ॥२२॥ कालुष्यं जागरे जीवे स्वप्ने स्वल्पा
प्रसन्नता ॥ सम्यक् प्रसीदत्यत्रेति संप्रसादः सुषुप्तकम् ॥२३॥ स्वप्ने
रत्वा चरित्वाऽथ विश्रांतः संप्रसादके ॥ पुनरायात्यसौ नाडीं स्वप्ना-

---

१ न तत्र रथयोगा न पन्थानो भवंत्यथ रथान् रथयोगान्पथः सृजते न तत्रानंदा मुदः प्रमुदो भवंत्यथानंदान् मुदः प्रमुदः सृजते न तत्र वेशांताः पुष्करिण्यः स्रवंत्यो भवंत्यथ वेशांतान्पुष्करिण्यः स्रवंत्यः सृजते सहि कर्ता। २ द्रुतं शीघ्रम्। ३ स वा एष एतस्मिन्संप्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्या द्रवति स्वप्नायैव स यत्तत्र किंचित्पश्यत्यनन्वागतस्तेन भवत्यसंगो ह्ययं पुरुष इत्येवमेवैतद्याज्ञवल्क्य सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति।

र्थमिति योजना ॥२४॥ दृष्ट्वैवेत्येवशब्देन न कृत्वेति विवक्षितम् ॥ न कर्म कुरुते स्वप्ने कारकाणामसंभवात् ॥२५॥ जागरात्स्वप्नमाप्नोति स्वप्नात्सुप्तिमिति क्रमात् ॥ वैपरीत्यं प्रतिन्यायं प्रतिमार्गं इतीर्यते ॥२६॥ प्रतियोनि यथा स्थानं स्वप्ननाड्यादि भण्यते ॥ प्रतिमार्गमवाप्याथ स्वप्नाय स्थानमाव्रजेत् ॥२७॥ अनन्वागमने हेतुरसंगत्वं हि शब्दतः ॥ सूच्यते बाधकस्तर्कः प्रसिद्धिर्वाऽत्र लौकिकी ॥२८॥ यद्वाऽनन्वागतत्वेन विवेकः कर्मणः कृतः ॥ असंगत्वेन कामस्य कामो न ह्यात्मनो गुणः ॥ २९ ॥ स ईयते यत्र कामं यथाकामं प्रवर्तते ॥ इति श्रुतिद्वयं स्वप्ने विस्पष्टं काममब्रवीत् ॥३०॥ स्वप्नकामस्य वस्तुत्वं श्रुतिभ्यां चेद्विवक्षितम् ॥ प्रबोधेऽप्यनुवर्तेत तच्च नास्ति ततो मृषा ॥ ३१ ॥ जाग्रत्प्रत्यक्षमाश्रित्य जागरे मृत्युसत्यताम् ॥ आशंक्य पुनरप्राक्षीद्[1]दृष्ट्वैवेति तदुत्तरम् ॥३२॥ मूढप्रत्यक्षतः कर्ता विद्वत्प्रत्यक्षतोऽक्रियः ॥ विवेकिनामनुभवादात्मज्योतिर्विवेचितम् ॥३३॥ असकृत्स्वप्नबुद्धांतसंचारेऽपि न बुद्धवान् ॥ इत्यर्थेऽस्मिन्म[2]हामत्स्यो दृष्टांतत्वेन वर्ण्यते ॥३४॥ इत्थं स्वप्नप्रसंगेन देहादिव्यतिरिक्तता ॥ स्वप्नभत्वमसंगत्वं चेत्येतेऽर्थाः प्रपंचिताः ॥३५॥ स एष परलोकस्य दृष्टांतः स्वप्न ईरितः ॥ सुषुप्तिर्मोक्षदृष्टांतस्तदर्थो ग्रंथ उत्तरः ॥३६॥ [3]तद्वा अस्यैतदित्यत्र प्राप्तकामस्वभावताम् ॥ वक्तुं

---

१ स वा एष एतस्मिन्बुद्धांते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः इत्यादि पूर्ववत् । २ तद्यथा महामत्स्य उभे कूलेऽनुसंचरति पूर्वं चापरं चैवमेवायं पुरुष एतावुभावंतावनुसंचरति स्वप्नांतं च बुद्धांतं च । ३ तद्वा अस्यैतदतिच्छंदा अपहतपाप्माऽभय९ रूपं तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किंचन वेद नांतरमेवमेवायं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नांतरं तद्वास्यैतदाप्तकाममात्मकाममकाम९ रूप९ शोकांतरम् ।

सुप्तावदुःखत्वं वक्ति श्येननिदर्शनात् ॥३७॥ आत्मस्वभावो निःशेषं पुंजीकृत्येह लक्ष्यते ॥ सुप्तौ मुक्ताविवाद्वैतस्वप्रभानंदलक्षणः ॥३८॥ अविद्या तु स्थिताऽप्यत्र द्वैतदुःखाद्यनुद्भवात् ॥ स्वभावं न तिरोधत्ते स्वप्रभानंदमद्वयम् ॥३९॥ द्वैतदुःखादिरूपं यत्स्वात्मनः स्वप्रजाग्रतोः ॥ तदविद्योत्थमित्येतत्ता वा अस्येति वर्ण्यते ॥ ४० ॥ विद्यायाः परमोत्कर्षे जाग्रत्साक्ष्यात्मवासना ॥ सर्वोऽस्मीति मतिं स्वप्ने करोत्यद्वैतभासिनि ॥४१॥ सर्वात्मभावः परमो लोको बाधविवर्जनात् ॥ बाध्यंते देवराजाद्या इवशब्दश्रुतत्वतः ॥४२॥ नन्वद्वैतमपि द्वैतं सुप्त्यसुप्त्योरिहात्मनि ॥ क्रमाद्भात्यत्र किं रूपं तस्येत्याशंक्य वर्ण्यते ॥४३॥ यत्सार्वात्म्यं पुरा प्रोक्तं तदेवाद्वैतमात्मनः ॥ रूपमागमतः स्वानुभूतेश्च पुरुषार्थतः ॥४४॥ शास्त्रप्रसिद्धिं तच्छब्दो वक्ति स्वानुभवं पुनः ॥ एतच्छब्दः पुमर्थत्वमतिच्छंदादिनोच्यते ॥४५॥ शिवमद्वैतमित्यादि शास्त्रमुद्घुष्यते बहु ॥ समाधिसुप्त्योरद्वैतं स्वयमेवानुभूयते ॥ ४६ ॥ छंदः कामः कर्म पापभयं स्यात्कर्मणः फलम् ॥ अनर्थरूपं त्रितयमद्वैते वीक्ष्यते न हि ॥४७॥ त्रितयेन तु यद्युक्तं द्वैतं तस्य पुमर्थता ॥ नेति द्वैतश्रुतावस्थां वैशब्देन निवर्तते ॥४८॥ योषिदालिंगितक्षेत्रं गृहं वाऽप्यविचारयन् ॥ यथा सुखी तथा सुप्तः कामभीत्यादिवर्जनात् ॥४९॥ तद्वा अस्येति वाक्येन

---

१ तद्यथास्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रांतः संहृत्य पक्षौ सल्लयायैव ध्रियत एवमेवायं पुरुष एतस्मा अंताय धावति यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति । २ ता वा अस्यैता हिता नाम नाड्यो यथा केशः सहस्रधा भिन्नस्तावताऽणिम्ना तिष्ठति शुक्लस्य नीलस्य पिंगलस्य हरितस्य लोहितस्य पूर्णा अथ यत्रैनं घ्नंतीव जिनंतीव हस्तीव विच्छाययति गर्तमिव पतति यदेव जाग्रद्भयं पश्यति तदत्राविद्यया मन्यतेऽथ यत्र देव इव राजेवाहमेवेदꣳ सर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः ।

कामाभावः प्रपंच्यते ॥ आत्मरूपं यदद्वैतमाप्तकामं तदीक्षताम् ॥५०॥
सुषुप्सुश्च समाधित्सुर्बाह्यं कामयते न हि ॥ अपि त्वात्मानमेवात्मा
प्राप्त एवाऽखिलैः सदा ॥५१॥ काम्यभोजनतस्तृप्तस्तदा भोज्यं न
वांछति ॥ एवं काम्यात्मनि प्राप्ते किमन्यत्काम्यते पुनः ॥ ५२ ॥
आत्मरूपमकामं यत्तच्छोकरहितं सदा ॥ शोकोत्तरं पृथक् शोका-
दिति निःशोकतोच्यते ॥५३॥ ननु देहाभिमानश्च धर्माऽधर्मौ च
शोकदाः ॥ यथा जागरणे तद्वत्सुषुप्तौ च प्रसज्जते ॥५४॥ मैवं पिता[1]-
ऽहमित्यादिदेहात्मभ्रांतिलोपनात् ॥ पितृत्वयुक्तदेहेऽभिमानः सुप्तस्य
नेक्ष्यते ॥५५॥ तत्तद्देहाभिमानस्तु क्षीणतत्कर्मसंक्षयात् ॥ पुण्येन
पाप्मनाऽनन्वागतं रूपं परात्मनः ॥५६॥ हृदयाख्यं मनस्तस्य पुण्य-
पापे ततोऽखिलाः ॥ शोका मनोगताः सुप्तौ शोकानात्माऽतिवर्तते
॥५७॥ ननु शोकादिमत्सुप्तौ चैतन्यमपि लुप्यते ॥ सुप्तो न पश्यती-
त्येवमाहुः सर्वेऽपि लौकिकाः ॥५८॥ आत्मन्यदृष्टवशतो ज्ञानमि-
च्छादिवद्भवेत् ॥ इत्याहुस्तार्किकाः सुप्तौ न ज्ञानं कर्मणः क्षयात् ॥५९॥
यद्वै तन्नेत्यादिवाक्यैरस्योत्तरमुदीर्यते[2] ॥ न चिल्लोपः किंतु बुद्धेर्लोप
इत्येतदुत्तरम् ॥६०॥ तच्छब्दः सुप्तिमाचष्टे वैशब्दोऽवधृतो भवेत् ॥
तत्र सुप्तौ पुमान्नैव पश्यतीति जना जगुः ॥६१॥ अदर्शनं सर्वथेति

---

१ अत्र पिताऽपिता भवति माताऽमाता लोका अलोका देवा अदेवा वेदा अवेदा अत्र स्तेनोऽस्तेनो भवति भ्रूणहाऽभ्रूणहा चांडालोऽचांडालः पौल्कसोऽपौल्कसः श्रमणोऽश्रमणस्तापसोऽतापसोऽनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वाञ्छोकान्हृदयस्य भवति । २ यद्वैतन्न पश्यति पश्यन्वैतन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत् । यद्वैतन्न जिघ्रति यद्वैतन्न रसयते यद्वैतन्न वदति यद्वैतन्न शृणोति यद्वैतन्न मनुते यद्वैतन्न स्पृशति यद्वैतन्न विजानाति ।

तदाहुरविवेकिनः ॥ तद्विवेच्य तथा चात्मा पश्यन्नेव न पश्यति ॥६२॥ साक्षी चैतन्यनित्यत्वात्पश्यन्नेव व्यवस्थितः ॥ ज्ञातृज्ञानज्ञेयलोपाद्व्यवहारं न पश्यति ॥६३॥ तस्मात्सुप्तौ चिदद्वैतं यद्रूपं परमात्मनः ॥ एतद्द्रढयितुं प्रोक्ताः पर्याया बहवः श्रुतौ॥६४॥ननु सर्वैर्जनैर्द्वैतं जागरे स्पष्टमीक्ष्यते ॥ स द्वैत एव किं न स्यादात्मेत्याशंक्य वर्ण्यते ॥६५॥ यत्रैव जागरे स्वस्मादन्यत्किंचिदिव भ्रमः ॥ तत्रैवान्यः स्वयं द्रष्टा दृश्यमन्यदिवेक्षते॥६६॥अद्वैतमित्युपक्रम्य व्याख्यातं तद्धि विस्तरात्॥ सलिलादिगिरा[1] तस्य क्रियते चोपसंहृतिः ॥६७॥ आत्मा सलिलवच्छुद्धः कार्यकारणहीनतः ॥ स्वतोऽवबोधमात्रत्वात्कुतो विद्यादिसंगतिः ॥६८॥ अंतरेणापि संबंधं कार्यकारणवस्तुनः ॥ स्वतोऽनेकात्मकं तत्स्यादित्याशंक्यैकतोच्यते ॥६९॥ अकारकस्वभावत्वमद्रष्टेत्यभिधीयते ॥ यत्र हि द्वैतमित्युक्तेर्यत्र त्वस्येति चेरणात् ॥७०॥ स्वतः पूर्णात्मकं ज्योतिर्यत्र द्रष्टेति चोच्यते ॥ अविद्याकार्यराहित्याद्द्वैतोऽयं भवेत्स्वतः ॥७१॥ प्रत्यग्दृष्ट्यव्यवहिते प्रात्यक्ष्यादात्मवस्तुनः ॥ एष इत्यात्मनिर्देशो यत्साक्षादिति च श्रुतेः ॥७२॥ अन्यावृताननुगतं निःसामान्यविशेषवत् ॥ ब्रह्मेति मुख्यवृत्त्येह वस्तु श्रुत्याभिधीयते ॥७३॥ ततो लोकयतेर्धातोर्दर्शनार्थत्वहेतुतः ॥ प्रकृतत्वात्तथा दृष्टेर्लोकनं लोक उच्यते ॥७४॥ विज्ञानपुरुषस्यास्य योक्ता ब्रह्मात्मता पुरा ॥ नैष्ठिकी गतिरेषाऽत्र गत्यंतरसमाप्तितः ॥७५॥ संपच्च परमैषैवमोहेच्छाश्चान्यसंपदः ॥ उत्कर्षातिशयः संपद्विभूतिश्चेति भण्यते ॥७६॥एषोऽस्य परमो लोको लोकास्त्वन्ये क्षयिष्णवः ॥ क्षयिष्णुसाध-

1 सलिल एको द्रष्टाऽद्वैतो भवत्येष ब्रह्मलोकः सम्राडिति हैनमनुशशास याज्ञवल्क्य एषास्य परमा गतिरेषास्य परमा संपदेषोऽस्य परमो लोक एषोऽस्य परम आनंद एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंति ।

नायत्ता नन्वेषा साधनाश्रयात् ॥७७॥ आनंदः परमोऽस्यैव सुखोत्कर्ष-समाप्तितः ॥ सर्वानंदातिशायित्वात्तथा चैतत्प्रवक्ष्यते ॥७८॥ आनंदः परमोऽस्यैव इत्युक्तार्थप्रसिद्धये ॥ एतस्यैवेति वचसा समर्थो हेतुरुच्यते ॥७९॥ कृत्स्नोऽपि चैष आनंदस्तदविद्यैकहेतुतः ॥ बुद्ध्याद्युपाध्यवच्छेदान्मात्रेति व्यपदिश्यते॥८०॥ मानुषादिकहैरण्यगर्भांतानंदमात्रया ॥ परानंदं बोधयितुं श्रोत्रिये तदुदाहृतिः ॥८१॥ श्रोत्रियो वेदशास्त्रज्ञो निष्पापो ब्रह्मवित्त्वतः ॥ भोग्यदोषान्विविच्यास्ते नातः कामेन हन्यते ॥८२॥ सुखं तृप्तिरकामत्वमित्येकार्था इमा गिरः ॥ सर्वकामविहीनेऽतः सुखं सर्वं व्यवस्थितम् ॥८३॥ श्रोत्रिये कामराहित्यात्सर्वानंदाः सह स्थिताः ॥ सोऽश्नुते सकलान्कामान्सहेति प्राह तित्तिरिः ॥८४॥ सूत्रात्परमनंतत्वाद्भणितं विनिवर्तते ॥ यतो वाचो निवर्तंत इति श्रुत्यंतरं जगौ ॥८५॥ श्रोत्रियेणानुभूतो यो ब्रह्मानंदोऽस्य विप्रुषः ॥ सार्वभौमादिसूत्रांताः प्राणिनोऽनुभवंत्यमी ॥८६॥ वक्तव्यार्थे समाप्तेऽपि राजा पृच्छति पूर्ववत् ॥ भीतो मुनिर्भये हेतुर्मेधावीत्यादिनोक्तवान् ॥८७॥ सर्वेभ्यो निर्णयेभ्यो मामरौत्सीन्न तु मुंचति ॥ अयमेव भये हेतुर्नोत्तरानवबोधनम् ॥८८॥ स्वप्नः सुप्तिश्च

१ स यो मनुष्याणाꣳ राद्धः समृद्धो भवत्यन्येषामधिपतिः सर्वैर्मानुष्यकैर्भोगैः संपन्नतमः स मनुष्याणां परम आनंदोऽथ ये शतं मनुष्याणामानंदाः स एकः पितॄणां जितलोकानामानंदोऽथ ये शतं पितॄणां जितलोकानामानंदाः स एको गंधर्वलोक आनंदोऽथ ये शतं गंधर्वलोक आनंदाः स एकः कर्मदेवानामानंदो ये कर्मणा देवत्वमभिसंपद्यंतेऽथ ये शतं कर्मदेवानामानंदाः स एक आजानदेवानामानंदो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ ये शतमाजानदेवानामानंदाः स एकः प्रजापतिलोक आनंदो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ ये शतं प्रजापतिलोक आनंदाः स एको ब्रह्मलोक आनंदो यश्च श्रोत्रियोऽवृजिनोऽकामहतः ।

दृष्टांतौ परलोकविमोक्षयोः ॥ तावेव मुनिना प्रोक्तौ शिष्टं दार्ष्टांतिकद्वयम् ॥८९॥ स्वप्राज्जागरणं यद्वद्देहाल्लोकांतरं तथा ॥ इत्यभिप्रेत्य मुनिना स्वप्राद्बोधोऽभिधीयते ॥९०॥ शकटं बहुभिर्द्रव्यैर्योजितं गुरुभारतः ॥ कुर्वन् शब्दान्बहून्याति चेतनेन प्रयोजितम् ॥९१॥ शरीरस्थो हि लिंगात्मा ह्यन्वारूढश्चिदात्मना ॥ शब्दान्कुर्वन् हि हिक्कादीन्प्रैत्यूर्ध्वश्वासपूर्वकम् ॥९२॥ उपाध्यारोहमन्वात्मा रूढवत्प्रतिभासते ॥ भानोरिवोदपात्रादावारोहो नात्मनः स्वतः ॥९३॥ मर्मसूत्कृष्यमाणेषु वायुनोदानरूपिणा ॥ मुमूर्षोरत्र यद्दुःखं स्मर्यतां तन्मुमुक्षुभिः ॥९४॥ रोगेण जरया वा यद्देहकार्श्यं यदाप्नुयात् ॥ तदाम्रादिफलं वृक्षादिवांगेभ्यः प्रमुच्यते ॥९५॥ निर्गत्य हृदयस्थानान्नाडीमार्गेण जागरम् ॥ प्राप्तोऽत्र वैपरीत्येन नाडीमार्गाद्धृदि व्रजेत् ॥९६॥ जाग्रत्स्वप्रादिसिद्ध्यर्थं गमनागमने पुरा ॥ इदानीं त्वन्यदेहेऽसौ प्राणं धारयितुं व्रजेत् ॥९७॥ ननूपादित्सिते देहे भोगाय प्राणधारणम् ॥ भोगसंपादने नास्ति शक्तिरस्येति चेच्छृणु ॥९८॥ तत्कर्मोपार्जितैरन्यैर्भोग्यं संपाद्यते पुरा ॥ इत्येतद्विशदीकर्तुं राजदृष्टांत[3] उच्यते ॥९९॥ राज्ञा जीवितदानेन ह्युग्रादय उपार्जिताः ॥ मुमूर्षुणा भाविदेहबंधवः कर्मणार्जिताः ॥२००॥ एवं पुत्रादिभावाय प्रतीक्षंतेऽखिलाः सदा ॥ ऋतावस्मिन्समायाति ब्रह्म पुत्रादिरूपतः ॥१॥ नन्विंद्रियाणि प्रेतस्य लीयंते वपुषा सह ॥ इत्याहुस्तार्किका ब्रह्म निरुपाधिः कथं व्रजेत् ॥२॥ प्राणोपाधिक

---

१ स वा एष एतस्मिन्स्वप्नांते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं चपुनः प्रतिन्यायं प्रतियोन्या द्रवति बुद्धान्तायैव । २ तद्यथाम्रं वोदुंबरं वा पिप्पलं वा बंधनात्प्रमुच्यत एवमेवायं पुरुष एभ्योऽङ्गेभ्यः संप्रमुच्य पुनः प्रतिन्यायं प्रतियोन्या द्रवति प्राणायैव । ३ तद्यथा राजानमायांतमुग्राः प्रत्येनसः सूतग्रामण्योऽन्नैरित्यादिवाक्येन।

एवात्मा गच्छतीति विवक्षया ॥ प्राणानामात्मसामीप्यगतिं वक्ति मृतौ श्रुतिः ॥३॥ राजानं [1]प्रैयियासंतमाभिमुख्येन सेवितुम् ॥ आयांत्युग्रादयस्तद्वत्प्राणानामात्मसंगतिः ॥४॥ तृतीयब्राह्मणे प्रोक्ता देहे स्वप्नादिसंसृतिः ॥ देहांतरेषु संसारो मुक्तिश्चाथ प्रवक्ष्यते ॥५॥ स मुमूर्षुर्यदा देहे दौर्बल्यं प्राप्य मूढताम् ॥ प्राप्नोतीव तदा चक्षुराद्या आयांति देहिनम् ॥६॥ राजदृष्टांततः प्रोक्तां प्राणानामात्मसंगतिम् ॥ अनूद्य तत्प्रकारोऽत्र[2] विस्तरेणाभिधीयते ॥७॥ तेजो[3]मात्राश्चक्षुराद्याः प्रसृता मत्स्यजालवत् ॥ जागरेऽथ मुमूर्षुस्ताः समादाय हृदि व्रजेत् ॥८॥ अनुगृह्णाति यः पूर्वं चाक्षुषः पुरुषो रविः ॥ भोगार्थमधुना सोऽयं भोगाभावादुपेक्षते ॥९॥ इंद्रियस्योपसंहारादादित्यस्याप्युपेक्षया ॥ आत्मा द्रष्टुमसामर्थ्यादरूपोऽज्ञो भवेत्तदा ॥१०॥ अस्मिन्नर्थे सर्वलोकप्रसिद्धिरभिधीयते ॥ [4]एकीभावादयं नैवं पश्यतीति जगुर्जनाः ॥११॥ चक्षुर्बुद्धावैक्यमेति रवौ रव्यंश एकताम् ॥ इंद्रियांतरवद्देवेष्वयं न्यायोऽत्र योज्यताम्

१ तद्यथा राजानं प्रयियासंतमुग्राः प्रत्येनसः सूतग्रामण्योऽभिसमायंत्येवमेवेममात्मानमंतकाले सर्वे प्राणा अभिसमायंति यत्रैतदूर्ध्वोच्छ्वासी भवति । २ चतुर्थब्राह्मणे । ३ ॐ स यत्रायमात्माऽबल्यं न्येत्य संमोहमिव न्येत्यथैनमेते प्राणा अभिसमायंति स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति स यत्रैष चाक्षुषः पुरुषः पराङ्पर्यावर्तते तथारूपज्ञो भवति ॥ ४ एकीभवति न पश्यतीत्याहुरेकीभवति न जिघ्रतीत्याहुरेकीभवति न रसयत इत्याहुरेकीभवति न वदतीत्याहुरेकीभवति न शृणोतीत्याहुरेकीभवति न मनुत इत्याहुरेकीभवति न स्पृशतीत्याहुरेकीभवति न विजानातीत्याहुस्तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामंतं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामंतꣳ सर्वे प्राणा अनूत्क्रामंति स विज्ञानो भवति स विज्ञानमेवान्ववक्रामति तं विद्याकर्मणी समन्वारमेते पूर्वप्रज्ञा च ।

॥१२॥कृत्स्नप्राणोऽथ संहारे संयुक्तस्य मुमूर्षतः॥ नाड्यग्रं हृदयस्याथ प्रकर्षेण प्रकाशते ॥१३॥ भाविदेहात्मता यस्य प्रत्यक्चैतन्यबिंबता ॥ वासनैवात्मनः सैषा प्रद्योतवचसोच्यते ॥१४॥ स एष कर्मजो बुद्धेः प्राकाशो जायते मृतौ ॥ स्वकर्मनिर्मितं लोकं तेनात्माऽयं प्रपश्यति ॥१५॥ स्वप्नवत्प्राप्य तद्भावः पश्चाद्देहाद्विनिःसरेत् ॥ गम्यलोकानुसारेण द्वारं स्याच्चक्षुरादिकम् ॥१६॥ देहाज्जिगमिषुः प्राणसहितो निर्गतः पुनः ॥ सविज्ञानो भवेत्पूर्वं हृदि प्रद्योतनं यथा ॥१७॥ पुरा नाडीविशेषेण निर्गंतुं ज्ञानमीरितम् ॥ गंतुं लोकविशेषेऽथ पुनर्विज्ञानमीर्यते ॥१८॥ हेतुर्जाग्रद्वासनास्य स्वप्रा-रंभे यथा तथा ॥ जन्मांतरारंभहेतुः किं स्यादिति तदुच्यते ॥१९॥ विद्या संपादिता तेन पुरा कर्म च यत्कृतम् ॥ या वासना च तत्सर्वं जन्म भोग्यादिकारणम् ॥२०॥ देहं विद्या परिच्छिद्या-दीदृशो देह इत्यथ ॥ विकर्तृकर्मवोढ्री तु पूर्वप्रज्ञेह पूर्वयोः ॥२१॥ समर्था सैव ते यस्मादुद्वोढुं ज्ञानकर्मणी ॥ नरस्यातः प्रधानत्वा-त्ताभ्यां सा गृह्यते पृथक् ॥२२॥ सर्वगस्य मनोमात्रगतिं ब्रूतेऽत्र तार्किकः ॥ श्रुतिस्तु स्वमतं ब्रूते जलूकाख्यनिदर्शनात् ॥२३॥ जलूका[1] हि तृणाग्रस्था स्वमुखेन तृणांतरम्॥ अवलंब्य वपुः शिष्टं सर्व-तंत्रोपसंहरेत् ॥२४॥ लिंगदेहोपाधिरात्मा धिया देहांतरं स्मरन् ॥ लिंगोपाधिकमात्मानं प्रापयेदन्यदेहकम्॥२५॥ ननु देहांतरारंभे उपा-दानं किमात्मनः ॥ एतद्देहारंभकं यत्तदेवोतान्यदीर्यताम् ॥२६॥

---

१ तद्यथा तृणजलायुका तृणस्यांतं गत्वाऽन्यमाक्रममाक्रम्यात्मानमुपसꣳहर-त्येवमेवायमात्मेदꣳ शरीरं निहत्याविद्यां गमयित्वाऽन्यमाक्रममाक्रम्यात्मानमुप-सꣳहरति ।

स्वर्णकारः सुवर्णांशमादायान्यं नवं नवम् ॥ तेनैव कुरुते भूय उप-
मृद्यातियत्नतः ॥२७॥ पंचीकृतास्तु भूतांशाः स्थूलदेहस्य हेतवः ॥
अल्पत्वेनातिसूक्ष्मास्तैर्लिंगं तिष्ठति वेष्टितम् ॥२८॥ निर्मितस्तैरयं
देहः पोषितः पितृवीर्यतः ॥ मृतौ कंचुकवत्त्याज्यो बाह्यांशो वीर्य-
निर्मितः ॥२९॥ अधिष्ठानारोप्यभागौ तेषु देहेषु यौ स्थितौ ॥
तादृशौ विशदीकर्तुं स वा इत्यादिका श्रुतिः ॥३०॥ यः संसारी पुरा
प्रोक्तः स एवायं स्वतः स्फुरन् ॥ साक्षिचैतन्यरूपत्वादधिष्ठानम-
नात्मनः ॥ ३१ ॥ विज्ञानं कर्तृतोपाधिर्मनःप्राणादयोऽखिलाः ॥
बहिर्बहिः समारोप्याः सर्वमारोपितं चिति ॥ ३२ ॥ तद्यदित्या-
दिना सर्वशब्दस्यार्थ उदाहृतः ॥ प्रत्यक्षवस्तुन्यध्यासे सतीदंमयता
भवेत् ॥ ३३ ॥ परोक्षवस्तुन्यध्यासाददोमय इतीर्यते ॥ आरो-
पोक्तिसमाप्त्यर्थमितिशब्दः प्रयुज्यते ॥ ३४ ॥ इदंमयत्वं विस्प-
ष्टमैहिकत्वादुपेक्ष्य तत् ॥ अदोमयत्वं व्याचष्टे यथाकारीति
वाक्यतः ॥ ३५ ॥ करणं नित्यकर्म स्यात्काम्यं तु चरणं भवेत् ॥
कर्म वा करणे शक्तिश्चरणं प्रत्ययात्मकम् ॥ ३६ ॥ वासना कर्म
विद्या च त्रयं जन्मप्रयोजकम् ॥ उक्तं तत्र प्रधानत्वं कर्मणः श्रूयते

---

१ तद्यथा पेशस्कारी पेशसो मात्रामुपादायाऽन्यन्नवतरं कल्याणतरꣳ रूपं तनुत एवमेवायमात्मेदꣳ शरीरं निहत्याविद्यां गमयित्वाऽन्यन्नवतरं कल्याणतरꣳ रूपं कुरुते पित्र्यं वा गांधर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वाऽन्येषां वा भूतानाम् । २ स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमयोऽतेजोमयः काममयोऽकाममयः क्रोधमयोऽक्रोधमयो धर्ममयोऽधर्ममयः सर्वमयस्तद्यदेतदिदंमयोऽदोमय इति । ३ यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्मणा भवति पापः पापेन अथो खल्वाहुः काममय एवायं पुरुष इति ।

पुनः ॥३७॥ पूर्वकांडपरा इत्थं कर्मप्राधान्यमूचिरे ॥ अथ वेदांतशास्त्रज्ञाः प्राहुः कामप्रधानताम् ॥३८॥ इत्येतद्विशदीकर्तुं स यथेत्युत्तरा श्रुतिः[1] ॥ कामः क्रतुः कर्म जन्मेत्येषामेव क्रमो भवेत् ॥३९॥ रुचेरतिशयः काम्ये विषये क्रतुरीर्यते ॥ पाक्षिकं धर्मकामे स्यात्करोत्येव कृतौ सति ॥४०॥ कामप्राधान्यदार्ढ्यार्थं मंत्रस्योदाहृतिः श्रुतौ[2] ॥ लिंग्यते गम्यते सर्वं मनसाऽतोऽस्य लिंगता ॥४१॥ यः पुरा स्वप्नदृष्टांतात्परो लोको विवक्षितः ॥ इति त्वित्युपसंहारं तदुक्तेः कृतवान्मुनिः ॥४२॥ मुक्तिः सुषुप्तिदृष्टांतान्मुनिना या विवक्षिता ॥ मुनिरारभते वक्तुं तामथेत्यादिवाक्यतः[3] ॥४३॥ पूर्वोक्तकामिवैषम्यमथशब्देन सूच्यते ॥ कामी संसरतीत्युक्तं कामाभावे विमुच्यते ॥४४॥ परमानंदरूपत्वमात्मनश्चेद्विबुध्यते ॥ कुतः कामयते भोग्यं ततो बोधादकामता ॥४५॥ बोधलभ्यमकामत्वं यथाकामेत्यसूत्रयत् ॥ योऽकाम इत्यादिनैतत्सूत्रं विव्रियते स्फुटम् ॥४६॥ योऽकामस्तस्य न प्राणा उत्क्रामंतीति योजना ॥ संसृतिः कामिनो यद्वदकामो मुच्यते तथा ॥४७॥ दृष्टानुश्राविका बाह्यकामा यस्य न संत्यसौ ॥ अकामस्तादृशत्वं तु निष्कामत्वेन सिध्यति ॥४८॥ विभ्रमापादिताः कामाः प्रत्यक्तत्त्वविवेकिनः ॥ यस्माद्विनिर्गताः सोऽयं निष्काम इति भण्यते ॥४९॥ आप्तकामत्वतः सिद्ध्येद्बुद्धेः कामविनिर्गमः ॥ अप्राप्तौ काम्यमानस्य कामः क्वापि

---

१ स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसंपद्यते । २ तदेष श्लोको भवति । तदेव सक्तः सह कर्मणैति लिंगं मनो यत्र निषक्तमस्य । प्राप्यांतं कर्मणस्तस्य यत्किंचेह करोत्ययं । तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मण इति तु कामयमानः । ३ अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामंति ब्रह्मैव सन्ब्रह्माप्येति ।

न निःसरेत् ॥५०॥ एवं सत्याप्तकामत्वं निःकामत्वस्य साधनम् ॥ कामाप्तौ त्वाप्तकामत्वमेव हेतुर्न चेतरत् ॥५१॥ निरुपाधिपरानंद आत्मेति श्रुतिसंमतः ॥ आनंदाः सर्वभूतानां तस्मिन्नंतर्भवंति हि ॥५२॥ पुत्रादिजन्या आनंदा अपि तस्मिन्नवस्थिताः ॥ तथा विद्यात्मकामोऽयमाप्तकामो भवेदयम् ॥५३॥ य ईदृगाप्तकामो यः स निष्कामो भवेत्ततः ॥ निष्कामत्वादकामः सन्संसारात्प्रविमुच्यते ॥५४॥ उत्पन्नतत्त्वज्ञानस्य प्राणा अज्ञानबाधनात् ॥ नोत्क्रामंति न तिष्ठंति न च नश्यंत्यहेतुतः ॥५५॥ बंधस्य कल्पितत्वेन तन्मुक्तिरपि कल्पिता ॥ इत्यभिप्रायमाचष्टे ब्रह्मैवेत्यादिवाक्यतः॥ ५६॥ अविद्याध्वस्तिमापेक्ष्य सम्यग्धीजन्ममात्रतः ॥ आत्मा ब्रह्मैव सन्साक्षाद्ब्रह्माप्येतीति सुस्थितम् ॥५७॥ इत्येतत्सर्ववेदांतसर्वस्वं ब्राह्मणोदितम् ॥ अस्यैवार्थस्य दार्ढ्यार्थं मंत्रोदाहरणं भवेत् ॥५८॥ कामिनः सर्वसंसारः पुरा मंत्रेण वर्णितः ॥ अकामस्य विमोक्षोऽत्र तथा मंत्रेण वर्ण्यते ॥५९॥ पुंसो हृदि[1] श्रिताः कामा मुच्यंते निखिला यदा ॥ तदानीममृतो भूत्वा ब्रह्मैवात्र समश्नुते ॥६०॥ ननु ब्रह्माश्नुतेऽत्रेति जीवतो मुक्तिरीरिता ॥ जीवत्वे को विशेषोऽस्य बंधान्मुक्तावितीर्यताम् ॥६१॥ अभिमानः पूर्वमासीद्देहादावधुना तथा ॥ नास्तीत्यत्रातिविस्पष्टः सर्पदृष्टांत[2] उच्यते ॥६२॥ प्रत्यग्ज्ञानशिखिध्वस्ते मिथ्याज्ञाने सहेतुके ॥ नेति नेति स्वरूपत्वादशरीरो भवत्ययम् ॥६३॥ स्थूलदेहं परित्यज्य लिंगदेहयुतो यदि ॥ मृतस्तदा स्यान्न त्वेवममृतोऽसावतो भवेत् ॥६४॥ प्रकृष्टचेष्टाहेतुत्वात्साक्ष्युक्तः

१ तदेष श्लोको भवति । यदा सर्वे प्रमुच्यंते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इति । २ तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदꣳ शरीरꣳ शेतेऽथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव ।

प्राणशब्दतः ॥ को ह्येवान्यादिति प्रोक्तं चेष्टाहेतुत्वमात्मनः ॥६५॥ साक्षिणो ब्रह्मरूपत्वं ब्रह्मैवेत्यभिधीयते ॥ संसर्गशंकानुत्त्यर्थमेवकारः प्रयुज्यते ॥६६॥ संयोगः समवायो वा नैव ब्रह्मात्मनोरिह ॥ अखंडैकरसत्वं तु भवतीति विवक्षितम् ॥६७॥ तदेव विशदीकर्तुं तेज एवेत्युदीर्यते ॥ चैतन्यं तेज इत्युक्तं तच्चैकमुभयोरपि ॥६८॥ अविद्यादिनिवृत्तिश्च चैतन्यव्यतिरेकतः ॥ नास्तीत्येवमभिप्राय एवकारेण सूच्यते ॥६९॥ तत्त्वविद्यारसाकृष्टः श्रोतुं वांछति संग्रहात् ॥ साधनान्यपि विद्यायाः श्रोतुमिच्छति भूपतिः[1] ॥७०॥ एतत्सर्वं विवक्षुः सन्मुनिः संग्रहरूपिणः ॥ श्लोकानुदाहरत्तत्र ज्ञानमार्गमिमं जगौ ॥७१॥ श्लोकेन[2]आद्येन यः पंथाः प्रोक्तस्तस्मिन्मतांतरम् ॥ उपन्यस्याथ सिद्धांतं प्राह श्लोकांतरेण सः ॥७२॥ ब्रह्मविन्[3]मुक्तिमाप्नोति तेन बोधात्मना यथा ॥ पुण्यकृत्तैजसश्चादौ भूत्वाऽथ ब्रह्मविद्भवेत् ॥७३॥ तेजःशब्देन संशुद्धा बुद्धिरेवाभिधीयते ॥ पुण्ये कृते बुद्धिशुद्धौ विद्या स्यात्स्मर्यते तथा ॥७४॥ यत्पुण्यं बुद्धिशुद्ध्यर्थं यो योगश्चात्मबोधकृत् ॥ श्लोके द्वितीये तौ प्रोक्तौ तृतीये त्वन्यथोच्यते ॥७५॥ य[4]त्काम्यं कर्मयोगश्च योऽणिमादिप्रदो द्वयम् ॥ तत्संसारस्यैव हेतुर्न मुक्तावुपयुज्यते ॥ ७६ ॥ यु[5]ज्यते मुक्तभावोऽयं

---

१ सोहं भगवते सहस्रं ददामीति होवाच जनको वैदेहः । २ तदेते श्लोका भवंति । अणुः पंथा विततः पुराणो माꣳस्पृष्टोऽनुवित्तो मयैव । तेन धीरा अपि यंति ब्रह्मविदः स्वर्ग लोकमित ऊर्ध्वां विमुक्ताः । ३ तस्मिञ्छुक्लमुत नीलमाहुः पिंगलꣳ हरितꣳ रोहितं च । एष पंथा ब्रह्मणा हानुवित्तस्तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्च । ४ अंधं तमः प्रविशंति येऽविद्यामुपासते । ततो भूय इव ते तमो य उ विद्यायाꣳ रताः । ५ आनंदा नाम ते लोका अंधेन तमसावृताः । ताꣳस्ते प्रेत्याभिगच्छन्त्यविद्वांसोऽबुधा जनाः ।

तत्त्वबोधविवर्जनात् ॥ जन्मप्रवाह एवातश्चतुर्थे श्लोक ईर्यते ॥७७॥ ब्रह्मानुभवयुक्तानां विशेषो दुःखसंक्षयः ॥ श्लोकेन पंचमेनात्र विस्पष्टमभिधीयते ॥७८॥ न दुःखक्षय एवास्य किंतु विश्वस्य कर्तृता ॥ सर्वलोकात्मका चेति षष्ठे श्लोक उदीर्यते ॥७९॥ शास्त्राधिकारियुक्तेऽस्मिन्देहे विद्यात्परं पदम् ॥ अन्यथाऽनर्थ इत्येवं सप्तमे श्लोक ईर्यते ॥८०॥ गर्भप्रवेशादिरूपा जुगुप्सा नात्मवेदिनः ॥ इत्येषोऽर्थोऽष्टमे श्लोके विस्पष्टमभिधीयते ॥८१॥ निःशेषविक्रियाहेतुः कालातिक्रमहेतुतः ॥ देवैरुपास्य इत्येतन्नवमे श्लोक उच्यते ॥८२॥ चेतनाचेतनाधार आत्माऽस्य ब्रह्मतोचिता ॥ इति दर्शयितुं श्लोकं दशमं श्रुतिरब्रवीत् ॥८३॥ प्राणादिसंघ आत्मा स्यादेतस्य ब्रह्मता कथम् ॥ इत्याशंक्योत्तरं श्लोक एकादश उदीर्यते ॥८४॥ तस्यास्य दर्शनोपायः कः स्यादित्यभिचोदिते॥ श्लोकेन द्वादशेनाह मनसैवेति निर्णयम् ॥८५॥ अत्यंतभेदाभावेऽपि भेदाभेदौ तयोरिति ॥ मतं वारयितुं श्लोकस्त्रयोदश इहोच्यते ॥८६॥ बोधादूर्ध्वं च कर्तव्यम-

---

१ आत्मानं चेद्विजानीयादयमस्मीति पूरुषः। किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत्। २ यस्यानुवित्तः प्रतिबुद्ध आत्माऽस्मिन्संदेह्ये गहने प्रविष्टः। स विश्वकृत्स हि सर्वस्य कर्ता तस्य लोकः स तु लोक एव। ३ इहैव संतोऽथ विद्मस्तद्वयं न चेदवेदीर्महती विनष्टिः। य एतद्विदुरमृतास्ते भवन्त्यथेतरेऽतो दुःखमेवापियन्ति। ४ यदैतमनुपश्यत्यात्मानं देवमंजसा। ईशानं भूतभव्यस्य न ततो विजुगुप्सते। ५ यस्मादर्वाक्संवत्सरोऽहोभिः परिवर्तते। तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्। ६ यस्मिन्पंच पंचजना आकाशश्च प्रतिष्ठितः। तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम्। ७ प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुः। ते निचिक्युर्ब्रह्म पुराणमग्र्यम्। ८ मनसैवानुद्रष्टव्यं नेह नानास्ति किंचन। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति। ९ एकधैवाऽनुद्रष्टव्यमेतदप्रमेयं ध्रुवं। विरजः पर आकाशादज आत्मा महान् ध्रुवः।

स्तीत्याशंक्य वार्यते ॥ चतुर्दशेन श्लोकेन संग्रहोऽत्र समाप्यते ॥८७॥ मंत्रब्राह्मणसंघेन यत्तत्त्वं प्राङ्‌निरूपितम् ॥ तद्विद्यासाधनं सर्वं मुनिरेष विवक्षति ॥८८॥ तत्रादौ वेदतत्त्वस्यानुवादेन परिस्फुटम् ॥ निरूप्यते स्वरूपं तत्स वा इत्यादिवाक्यतः ॥८९॥ ब्रह्मत्वादेव जीवस्य भ्रांतजीवत्ववारणात् ॥ वशित्वाद्या जीवधर्माः शिष्यंते सोऽयमीश्वरः ॥९०॥ जीवत्ववद्वशित्वाद्या यद्यपि भ्रांतिकल्पिताः ॥ तथाप्येते समीचीनाः स्वप्ने पुत्राद्ययो यथा ॥९१॥ अत एव हि जिज्ञासुं प्ररोचयितुमीरितैः ॥ वशित्वाद्यैः प्रेर्यतेऽसौ यज्ञादौ ज्ञानसाधने ॥९२॥ जीवधर्मांश्चेशधर्माः संतीत्येतन्न मे मतम् ॥ असतामेव तेषां तु भानं मायिकमिष्यते ॥९३॥ कादाचित्की सतोऽसत्तेत्येष नाशो न तेष्वतः ॥ कालत्रयासत्त्वबोधरूपो बाधस्तु संभवेत् ॥९४॥ बाधिता अपि भासंते सामग्रीसंभवे सति ॥ आरब्धाशेषसामग्रीविनिवृत्तौ न भासनम् ॥९५॥ निवृत्तत्वाज्जीवधर्मा भासंते नैव कस्यचित् ॥ अनिवृत्ता ईशधर्मा अकर्मोपादितत्वतः ॥९६॥ भांति ते त्वीश्वरस्यापि बद्धानां च स्वबुद्धितः ॥ ईश्वरस्य हि लीला तैर्बद्धानां त्वतिविस्मयः ॥९७॥ सर्वेश्वरादिकः पूर्वशेषश्चेदुपसंहृतिः ॥ उत्तरस्य तु शेषत्वे बुभुत्साविषयो भवेत् ॥९८॥ यः सर्वेशत्वादिलक्ष्यस्तं वेदाध्ययनादिभिः ॥ ज्ञातुमिच्छत्यविज्ञातः

१ तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः । नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनं हि तदिति । २ स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयानेष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय । ३ तमेतं वेदानुवचनेन ब्राह्मणा विविदिषंति यज्ञेन दानेन तपसाऽनाशकेनैतमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमिच्छंतः प्रव्रजंति ।

स एवार्थो यतस्ततः ॥९९॥ बहिरंगं कर्मजातं संन्यासस्यांतरं-गताः ॥ प्रत्यासन्ना शांतिदांतिक्षांत्याद्या इत्यसौ क्रमः ॥३००॥ प्रत्यक्प्रवणतां बुद्धेः कर्माण्युत्पाद्य शुद्धितः ॥ कृतार्थान्यस्तमायांति प्रावृडंते घना इव ॥१॥ सामर्थ्यमीदृक् चेदस्ति कर्मणां तर्हि किं तव ॥ ज्ञानेनेति न वक्तव्यं मुनित्वार्थमपेक्षणात् ॥२॥ बुभुत्सतेऽ-यमात्मानं सर्वैर्यज्ञादिकर्मभिः ॥ एतमेव विदित्वाऽसौ मुनिर्भवति नान्यथा ॥३॥ अरुचिप्रतिबंधस्य[1] कर्मभिः प्रक्षये सति ॥ गृहस्थो वा परिव्राड्वा शास्त्रेणात्मानमीक्षते ॥४॥ जनकोषस्तगार्ग्यादेर्न स्याद्वेदनमन्यथा ॥ सुलभं तु परिव्राजो बहुविक्षेपवर्जनात् ॥५॥ सोढ्वापि कर्मविक्षेपं चित्तैकाग्र्ये क्षमो यदि ॥ तदा वेत्तु गृहस्थोऽपि प्रव्रजत्वन्यथा पुमान् ॥६॥ अतो विदित्वेति वाक्यं सामान्यवि-षयं भवेत् ॥ प्रव्रजंतीति वाक्यं तु विशेषेण प्रवर्तते ॥७॥ सकृ-द्बोधो वेदनं स्यान्मुनित्वं ज्ञानशीलता ॥ अज्ञानहानिर्बोधात्स्याज्जी-वन्मुक्तिर्मुनित्वतः ॥८॥ बुद्धोऽपि न मुनिः स्याच्चेद्विद्वत्संन्यासमा-चरेत् ॥ एतद्धे[2] स्मेति वाक्येन तदेतदभिधीयते ॥९॥ परिव्राड्भिर्बुद्ध आत्मा कीदृगित्यभिशंकिते ॥ स एष[3] नेति नेतीति श्रुतिः प्राहो-त्सुका सती ॥१०॥ ननु भिक्षादिना देहपोषणादौ समे सति ॥

---

१ अरुचिप्रतिबंधः । २ एतद्ध स्म वै तत्पूर्वे विद्वांसः प्रजां न कामयंते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति तेऽह स्म पुत्रैषणायाश्च वित्तै-षणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरंति या ह्येव पुत्रैषणा सा वित्तै-षणा या वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवतः । ३ स एष नेति नेत्यात्माऽगृह्यो नहि गृह्यतेऽशीर्यो नहि शीर्यतेऽसंगो नहि सज्यतेऽसितो न व्यथते न रिष्यति ।

आत्मतत्त्वविदः कोऽतिशयो मूढादितीर्यताम् ॥११॥ सर्वेषामपि मूढानां चित्ते स्तः पुण्यपापयोः ॥ एतमेवैकमात्मज्ञं चित्ते द्वे प्राप्नुतो नहि ॥१२॥ उभे उहेति हेतूक्ते तच्चिंताया असंभवे ॥ अतिक्रामति तत्त्वज्ञः पुण्यपापे उभे अपि ॥१३॥ कृते देहादिभिर्वास्तां द्वे कृते वा द्विधाऽपि च ॥ एवं तत्त्वविदं ते द्वे नैव तापयतः क्वचित् ॥१४॥ अंतरंगतरा ये ते शांतिदांत्यादयोऽखिलाः ॥ वक्तव्या इत्यभिप्रेत्य श्रुतिस्तत्र प्रवर्तते ॥१५॥ रुचिमान्कर्मसंन्यासी युक्तः शमदमादिभिः ॥ मुख्याधिकारी भूत्वाऽसावात्मन्यात्मानमीक्षते ॥१६॥ पुण्यं च जन्महेतुत्वादत्र पाप्मेति वर्ण्यते ॥ कर्महानिः पूर्वमुक्ता या तस्या उपसंहृतिः ॥१७॥ ब्रह्मत्वमेव ब्राह्मण्यमित्यभिप्रायमात्मनः ॥ विशदीकर्तुमाहैष ब्रह्मलोक इतीदृशम् ॥१८॥ ससाधनाया विद्यायाः संपूर्णत्वादयं नृपः ॥ स्वदेहसहितं राज्यं गुरवेऽस्मै न्यवेदयेत् ॥१९॥ आख्यायिकां परित्यज्य श्रुतिरस्मदनुग्रहात् ॥ सगुणं निर्गुणं ब्रह्म संक्षिप्योचे स वाँ इति ॥२०॥ पूजास्वीकारदातृत्वगुणयुक्तं महेश्वरम् ॥ य उपास्ते पुमानेष यथेष्टं लभते

---

१ एतमुहैवैते न तपत इत्यतः पापमकरवमित्यतः कल्याणमकरवमित्युभे उ हैवैष एते तरति नैनं कृताकृते तपतः। २ प्राणपोषणम् । ३ तदेतदृचाऽभ्युक्तं। एष नित्यो महिमा ब्राह्मणस्य न वर्धते कर्मणा नो कनीयान्। तस्यैव स्यात्पदवित्तं विदित्वा न लिप्यते कर्मणा पापकेनेति तस्मादेवंविच्छांतो दांत उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्यति सर्वमात्मानं पश्यति नैनं पाप्मा तरति सर्वं पाप्मानं तरति नैनं पाप्मा तपति सर्वं पाप्मानं तपति विपापो विरजो विचिकित्सो ब्राह्मणो भवत्येष ब्रह्मलोकः सम्राडिति होवाच याज्ञवल्क्यः सोऽहं भगवते विदेहान् ददामि मां चापि सह दास्यामीति स वा एष महानज आत्माऽन्नादो वसुदानो विंदते वसु य एवं वेद ।

धनम् ॥२१॥ विद्वद्दृष्ट्या स एवात्मा जरामरणवर्जितः ॥ आनंदो भयहीनश्च ब्रह्मैवाजो न चेतरः ॥२२॥ य एवं ब्रह्म जानाति तद्ब्रह्मैव भवत्यसौ ॥ हिशब्दोऽशेषवेदांतप्रसिद्धं सूचयेदिह ॥२३॥ जनकायात्मविद्यैषा याज्ञवल्क्येन वर्णिता ॥ तद्व्याख्यानेनानुगृह्णाद्विद्यातीर्थमहेश्वरः ॥३२४॥ इति श्रीविद्यारण्यविरचिते अनुभूतिप्रकाशे जनकविद्याप्रकाशो नामाष्टादशोऽध्यायः ॥ १८ ॥

शाखा तलवकाराणां सामवेदगताऽस्ति या ॥ विद्योक्ता तत्र संक्षेपात्तां विस्पष्टमिह ब्रुवे ॥१॥ तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ॥ इत्यर्जुनाय भगवानाह प्रश्नाख्यसाधनम् ॥२॥ नापृष्टः कस्यचिद्ब्रूयान्न चान्यायेन पृच्छतः ॥ जानन्नपि तु मेधावी जडवल्लोकमाचरेत् ॥३॥ इति शास्त्रमवेक्ष्यात्र कश्चिच्छिष्यगुणान्वितः ॥ उपसद्य गुरुं सम्यगप्राक्षीदात्मबुद्धये ॥४॥ मनःप्राणौ श्रोत्रचक्षुर्वाचश्च वपुषि स्थिताः ॥ प्रवर्तंते स्वस्वकार्ये विद्यते प्रेरको न वा ॥५॥ न चेत्तर्हि जडत्वेन प्रवृत्तिर्मनआदिषु ॥ न स्याद्विना प्रेरकेण शकटाद्यप्रवृत्तितः ॥६॥ चैतन्यमिंद्रियाणां चेद्ब्रह्मासत्वं प्रसज्यते ॥ इंद्रियेभ्यश्चेतनोऽन्यः प्रेरकोऽभ्युपगम्यताम् ॥७॥ इंद्रियैः साधनैर्जीवो यः कर्ताऽसौ प्रवर्तकः ॥ इति चेन्न यतो जीवे पारतंत्र्यमवेक्ष्यते ॥८॥ व्यापारमिंद्रियोत्थानं न करिष्येऽमुमित्ययम् ॥ संकल्प्यापि करोत्येव भूताविष्ट इवातुरः ॥९॥ इंद्रियाधिष्ठातृदेवा न स्वतंत्रा यथा वयम् ॥ धर्माधर्मात्मकं कर्म न स्वतंत्रं जडत्वतः ॥१०॥ तस्मात्केन प्रेरितं सद्विषयान्मनुते मनः ॥ कर्तुमुच्छ्वासनि-

---

१ स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्माभयं वै ब्रह्माभयꣳ हि वै ब्रह्म भवति य एवं वेद ।

श्वासौ प्राणः केन प्रणीयते ॥११॥ वाक्चक्षुःश्रोत्रमुख्यानि प्रेरयेत्करणानि कः ॥ ईश्वरश्चेत्किमेकोऽसौ बहवोऽमीत्युर्यताम् ॥ १२ ॥ प्रवर्त्यानामनंतत्वाद्वैलक्षण्याच्च नैकता ॥ नैकमत्यं बहुत्वे स्याद्बहुराजकदेशवत् ॥१३॥ उक्तदोषनिवृत्त्यर्थं गुरुर्वचनमब्रवीत् ॥ श्रोत्रस्य श्रोत्रमित्यादि तदर्थस्तु विविच्यते ॥१४॥ अंतर्याम्येक एवेशः स च सर्वं नियच्छति ॥ अधीयंते पृथिव्यादौ स्थितं वाजसनेयिनः ॥१५॥ स्थित्वा मनस्यांतरोऽस्माज्ज्ञायते मनसा न सः ॥ मनस्तस्य शरीरं स्यान्नियच्छत्यांतरो मनः ॥१६॥ एवं श्रुतः स सर्वेषु प्राणवागादिवस्तुषु ॥ अंतः प्रविष्टः शास्ताऽयमिति श्रुत्यंतरं जगौ ॥१७॥ सत्यं ज्ञानमनंतं यद्ब्रह्म वेदेषु वर्णितम् ॥ तदेव मायासंयोगादीश्वरत्वं प्रपद्यते ॥ १८ ॥ मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ॥ पराऽस्य शक्तिर्विविधा ता मायाशक्तयोऽखिलाः ॥१९॥ मायाभिरीशो बहुधा भाति सर्वेषु वस्तुषु ॥ श्रोत्रशक्तिमुपादाय श्रोत्रं सृष्ट्वाऽत्र भात्यसौ ॥२०॥ येन शब्दः श्रूयते तच्छ्रोत्रं श्रोत्रत्वमस्य यत् ॥ तस्येशशक्त्या सृष्टत्वाच्छ्रोत्रस्य श्रोत्रमीश्वरः ॥२१॥ व्याकृताऽव्याकृताकारौ यौ श्रोत्रस्य तयोरिदम् ॥ श्रोत्रं व्याकृत आकारः शक्तिरव्याकृताभिधा ॥२२॥ तच्छक्त्युपहितत्वेन ब्रह्मापि श्रोत्रमुच्यते ॥ शृणोत्यकर्ण इत्युक्तं श्रोत्रशक्तियुतत्वतः ॥२३॥ षष्ठ्यंतं करणं तस्य प्रथमांतं प्रवर्तकम् ॥ मनसो मन इत्यादावयं न्यायः समीक्ष्यताम् ॥२४॥ एकत्वेऽपीश्वरस्येत्थं तच्छक्तीनां बहुत्वतः ॥ विलक्षणाऽनंतवस्तुप्रेरणं संभविष्यति ॥२५॥ अक्षाधिष्ठातृदेवेषु जीवेष्वक्षेषु चेश्वरः ॥ अंतर्यामितया स्थित्वा नियच्छति यथातथम् ॥२६॥

शक्तौ चिदाभासवत्यां स्थिता नियमनक्रिया ॥ तदधिष्ठानचैतन्ये नियंतृत्वं प्रकल्पितम् ॥२७॥ नियंतृत्वोपाधिना यः परमात्मोपलक्षितः ॥ तमिंद्रियनिरोधेन धीराः पश्यंति योगिनः ॥२८॥ अदर्शने त्वहंकारतादात्म्यं चिति कल्प्यताम् ॥ तादात्म्याध्यासतो जीवो भूत्वाऽसौ बंधमाप्नुयात् ॥२९॥ अध्यासवारिका बुद्धिर्येषां धीरास्त ईरिताः ॥ बंधान्मुक्त्वा वपुस्त्यक्त्वा ते स्युर्मरणवर्जिताः ॥३०॥ ऐक्यभ्रांतिर्बंधकृत्स्यादहंकारचिदात्मनोः ॥ तद्विवेके कुतो बंधः शरीरं चात्मनः कुतः ॥३१॥ देहप्राणवियोगः स्यान्मरणे यस्य तौ नहि ॥ तद्वियोगः कथं तस्य चिदेकरसवस्तुनः ॥३२॥ बंधो देहो मृतिर्बोधमात्राच्चेत्संति नो तदा ॥ सर्वे बुध्वा निजात्मानं कृतकृत्याः कुतो नहि ॥३३॥ गुरूपदेशरहिता आत्मानं बोद्धुमक्षमाः ॥ चक्षुर्वागादयो यस्मान्न गच्छंति चिदात्मनि ॥३४॥ चक्षुर्न गच्छेन्नीरूपे वागवाच्यं कथं भवेत् ॥ अविकल्पमसंकल्पं गृहीतुं न मनोऽर्हति ॥३५॥ एवं सति कथं यूयं जानीथ मनसेति चेत् ॥ आचार्यनिरपेक्षेण न विद्मो मनसा वयम् ॥३६॥ आचार्योऽपि कथं ब्रूयादवाच्यमिति चेद्यथा ॥ बोधयेदभिधावृत्त्या तं प्रकारं न वेद्म्यहम् ॥३७॥ षष्ठीगुणक्रियाजातिरूढयः शब्दहेतवः ॥ नात्मन्यन्यतमोऽमीषां तेनात्मा नाभिधीयते ॥३८॥ ईदृशं यूयमाचार्याच्छ्रुतवंतः कथं त्विति ॥ ब्रूषे चेच्छुश्रुमात्मानमतद्व्यावृत्तितो वयम् ॥३९॥ ज्ञातं चाज्ञातमित्येव जगद्द्वेधावभासते ॥ तस्योभयस्य व्यावृत्त्या परमात्मावशिष्यते ॥४०॥ धीवृत्तिविषयीकृत्य यद्घटाद्यवभासयेत् ॥ विदितं तद्यत्र नो धीस्तत्स्यादविदितं खलु ॥४१॥ ज्ञाताज्ञाते साक्षिभास्ये स साक्षी भासते स्वयम् ॥

ज्ञाताज्ञातपरित्यागे साक्षिशेषो ह्यतिस्फुटः ॥४२॥ वेद्मीति यद्बला-
दात्थ न वेद्मीत्यपि यद्बलात् ॥ तदन्यनिरपेक्षं सज्ञातीत्यसद्गुरो-
र्वचः ॥४३॥ अज्ञातज्ञातयोः साक्षी ब्रह्मेत्येवंविधा तु धीः ॥
अज्ञानं नाशयत्येव न ब्रह्म स्फोरयत्यसौ ॥४४॥ स्वतः स्फुरण-
रूपेऽस्मिन्किमन्यत्स्फुरणं भवेत् ॥ स्फोर्यत्वाभावतस्तस्य न मनोग-
म्यता भवेत् ॥४५॥ अवाङ्मनसगम्यं तदाचार्येणोपदिश्यते ॥
शिष्येण बुध्यते चेत्थं न किंचिन्नोपपद्यते ॥४६॥ यन्नाभिधीयते वाचा
वाग्येन प्रेर्यते सदा ॥ ब्रह्म विद्धि तदेव त्वं न त्विदं यदुपासते
॥४७॥ उपासकास्तु सर्वज्ञसर्वशक्त्यादिशब्दतः ॥ वाच्यं स्वभिन्नं
ध्यायंति न मुख्यं ब्रह्म तद्भवेत् ॥४८॥ स्फोर्यते मनसा यन्न
स्फोरकं मनसस्तु यत् ॥ तद्ब्रह्म विद्धि न त्वेतद्यत्तु स्फोर्यमुपासते
॥४९॥ भावनाजन्यवृत्त्यैव स्फोर्यं ध्यायंत्युपासकाः ॥ उपासकेन
दृश्यं तद्ब्रह्म मुख्यं कथं भवेत् ॥५०॥ न दृश्यते चक्षुषा यच्चक्षुषो
भासकं तु यत् । तद्ब्रह्म विष्णुमूर्त्यादेर्न मुख्यब्रह्मताऽस्ति हि ॥५१॥
न श्रूयते यच्छ्रोत्रस्य साक्षी यद्ब्रह्म तद्भवेत् ॥ श्रुतं प्रणवनामादि
न मुख्यब्रह्मतामियात् ॥५२॥ न प्रेर्यते यत्प्राणेन प्राणस्य
प्रेरकं तु यत् ॥ तद्ब्रह्म न तु हंसाख्यमंत्रः प्राणप्रचो-
दितः ॥५३॥ अन्यैरपींद्रियैर्गम्यं न यत्किंत्वक्षभासकम् ॥
ब्रह्म विद्धि तदेव त्वं न त्विदं यदुपासते ॥५४॥ सर्वप्रत्ययवेद्यं
यत्सोपाधि ब्रह्म विद्यते ॥ उपासकात्पृथग्भूतं तदेवोपासते जनाः
॥ ५५ ॥ ब्रह्माभासमिदं रूपमुपेक्ष्यानिदमात्मकम् ॥ मुख्यब्रह्मैव
साक्ष्याख्यं ज्ञात्वा स्वानुभवं वद ॥५६॥ त्वत्कारुण्यात्सुष्ठु वेद
ब्रह्माहमिति वक्षि चेत् ॥ अल्पं वेत्सि न संपूर्णं ज्ञातृज्ञेयविभेदतः

॥५७॥ अखंडैकरसे तत्त्वे ज्ञातृत्वं प्रत्यगात्मनः ॥ देवस्य ब्रह्मते-त्येवं खंडनादल्पवेदनम् ॥५८॥ मीमांस्यमेव तेऽथापि भेदभ्रमनि-वृत्तये ॥ मीमांसित्वा निश्चयं ते वदेत्युक्तस्तथाऽकरोत् ॥५९॥ भेदभ्रमो निवृत्तोऽद्य यथाशास्त्रं विचारतः ॥ सुवेदेति न वेदेति द्वाभ्यां हीनं तु शेषितम् ॥६०॥ स्वप्रकाशं तमात्मानं तथात्वेनैव वेद्म्यहम् ॥ नान्यथाऽतो यथाशास्त्रं बुद्धं ब्रह्मेति निश्चयः ॥६१॥ सुवेदेत्यक्षविषये न वेदेत्यप्यभासिते ॥ वक्तुं युक्तं स्वयं भाते कथं तद्युज्यते द्वयम् ॥६२॥ मध्येऽस्माकं हे सखायो ज्ञाताज्ञातत्ववर्जि-तम् ॥ ब्रह्मेति वेत्ति योऽसौ हि यथाशास्त्रं विबुद्धवान् ॥६३॥ यल्लौकिकं वस्तु यच्च ब्रह्म तद्धि विलक्षणम् ॥ यस्यामतं तस्य मतं मतं यस्य न वेद सः ॥६४॥ लोके घटो मतो येन स घटज्ञ इतीर्यते ॥ येन मंत्रा मतं ब्रह्म न त्वसौ ब्रह्मविद्भवेत् ॥६५॥ मंतृ-मंतव्यरूपेण विविधत्वं विजानता ॥ अविज्ञातं ब्रह्मतत्त्वमखंडैकर-सात्मकम् ॥६६॥ विविधत्वमविज्ञाय यदखंडत्ववेदनम् ॥ तद्भवे-द्ब्रह्मविज्ञानं धीमद्भिर्बुध्यतां तथा ॥६७॥ ईदृशः प्रतिबोधो यस्तेन चेद्विदितं तदा ॥ मतं ब्रह्म भवेद्विद्वानमृतत्वं हि विंदते ॥६८॥ नित्यानित्यविवेकादियुक्तेन मनसा पुमान् ॥ वेदितं लभते वीर्यं विद्यया विंदतेऽमृतम् ॥६९॥ देहे प्राणवियोगाख्यामृतिरात्मनि कल्पिता ॥ अविद्यया विद्यया तु भ्रांतिः सा विनिवर्तते ॥७०॥ नैव जन्मनि सर्वस्मिन्विद्यासौ सुलभाऽपि तु ॥ शिष्यलक्षणसं-पूर्णजन्मन्येव हि लक्ष्यते ॥७१॥ ईश्वरानुग्रहाच्छांतिदांत्यादिगुण-संयुतम् ॥ जन्म चेल्लभ्यते तस्मिन्विद्यया मोक्षमाप्नुयात् ॥७२॥ नावेदि चेदिहालस्याद्विनष्टिर्महती भवेत् ॥ कदाचिज्जन्म पश्चादि-

रूपं स्यादिति वेत्ति कः ॥७३॥ तस्माच्छास्त्राधिकारेण युक्तं विप्रा-
दिजन्म चेत् ॥ लभ्यमालस्यरहितो विद्यादात्मानमद्वयम् ॥७४॥
नानात्मत्वभ्रमोच्छित्त्यै तत्तद्देहेष्ववस्थितम् ॥ स्वात्मत्वेनैव निश्चित्य
धीरा यांति कृतार्थताम् ॥७५॥ मायया दृश्यते लोको येऽस्मात्प्रेत्य
स्थिताः परे ॥ न तेषां जन्ममरणे विद्येते कर्हिचित्क्वचित् ॥७६॥
ईश्वरानुग्रहादेव भवेदद्वैतवासना ॥ नान्यथेति विवक्षित्वा काचि-
दाख्यायिकोच्यते ॥७७॥ देवार्थमीश्वरो युद्धे विजयं कुरुते सदा ॥
अज्ञात्वाऽनुग्रहं देवा जयगर्वं प्रपेदिरे ॥७८॥ जयः स्वकीय इत्येवं
देवाभिप्रायमीश्वरः ॥ ज्ञात्वा देवान्बोधयितुं तेषां प्रादुर्बभौ पुनः
॥७९॥ देवाः सभासदो दृष्ट्वा वपुरैशमलौकिकम् ॥ किमेतदिति
विज्ञातुं प्रेरयंताग्निमंतिके ॥८०॥ समागतं वह्निमीशः को भवा-
निति पृष्टवान् ॥ जातवेदोऽग्निनामाऽहमिति गर्वितवानसौ ॥८१॥
त्वयि किं वीर्यमित्याह गर्वं भंक्तुं परेश्वरः ॥ अग्निः सर्वं दहामीति
वाक्यं गर्वादवोचत ॥८२॥ स्वदत्तां शक्तिमाहृत्य दहेति तृणमित्य-
मुम् ॥ उवाचेशः सोऽपि दग्धुं न शशाकैव तत्तृणम् ॥८३॥ अग्नि-
वद्वायुरप्यत्र गर्वे भग्ने निवृत्तवान् ॥ निर्गर्वमिंद्रं दृष्ट्वेशः परीक्षायै
तिरोभवत् ॥८४॥ इंद्र ईशप्रसादार्थी तस्थावूर्ध्वं विलोकयन् ॥
अनुग्रहीतुमिंद्रं तमुमारूपोऽभवद्धरः ॥८५॥ देवि दृष्टं पुरा देवैः
किं तद्ब्रूहीति पृष्टवान् ॥ तद्ब्रह्मानुग्रहात्तस्य जयोऽभूदित्युवाच सा
॥८६॥ उत्कृष्टा अग्निवाय्विंद्रा ईषत्संभाषणादमी ॥ तेषामपींद्रः
पुण्यात्माऽनुग्रहोऽप्यधिको यतः ॥८७॥ ईशानुग्रहसिद्ध्यर्थं ब्रह्मोपास्यं
मुमुक्षुभिः ॥ तच्चाधिदैवमध्यात्ममधिभूतमुपास्यताम् ॥८८॥आविर्भा-
वतिरोभावौ विद्युद्वद्ब्रह्मणि स्थितौ ॥ ततो विद्युदुपाध्येतद्ब्रह्म स्यादधि-

दैवतम् ॥८९॥ मनोऽध्यात्ममुपाधि स्यात्स्मृतिसंकल्पसंयुतम् ॥ तद्ब्रह्मेति ब्रह्म नाम तन्नामकमुपास्यताम् ॥९०॥ यत्तैः संभजनीयं तद्भवेत्तद्वनामकम् ॥ तथैवोपासितं ब्रह्म दद्यादाचार्यसंपदम् ॥९१॥ तदुपासकमीशानुगृहीतं ब्रह्मवेदिनम् ॥ वांछंति विद्यां ब्रूहीति भक्तिमंतोऽखिला जनाः ॥९२॥ हे शिष्य ब्रह्मविद्या ते कथिताऽत्यंतविस्तरात् ॥ श्रोत्रस्य श्रोत्रमित्यादेस्तद्विद्यासाधनं शृणु ॥९३॥ वेदाः षडंगसहिता अग्निहोत्रादि कर्म च ॥ कृच्छ्रादिकं तपो दांतिस्तैर्विद्या प्रतितिष्ठति ॥९४॥ यत्सत्यं बाधरहितं तद्विद्यायतनं खलु ॥ साधनैः साधिता विद्या सत्येऽस्मिन्पर्यवस्यति ॥९५॥ अर्च्यते सुष्ठु यन्मुक्तिपदं तत्स्वर्ग उच्यते ॥ अनंतो नाशराहित्याज्ज्येष्ठः सर्वोत्तमत्वतः ॥९६॥ मुख्याधिकारिणः प्रष्टुः शिष्यस्य ब्रह्मबोधनम् ॥ ससाधनं सदाचार्य एवमत्रोपदिष्टवान् ॥९७॥ विद्यामेतां वेद योऽसौ पाप्मानं प्रतिबंधकम् ॥ अपहत्य विमुक्त्याख्ये स्वर्गेऽस्मिन्प्रतितिष्ठति ॥९८॥ अवाङ्मनसगम्यत्वमुपदेशश्च वेदनम् ॥ अविरोधेन तत्सर्वं विस्पष्टमिह वर्णितम् ॥९९॥ विद्या तलवकाराणां शाखायां श्रूयते स्फुटम् ॥ तद्व्याख्यानेन संतुष्याद्विद्यातीर्थमहेश्वरः ॥१००॥ इति श्रीविद्यारण्यविरचिते अनु० तलवकारविद्याप्रकाशो नामैकोनविंशोऽध्यायः ॥ १९ ॥

अथर्वणे तापनीये उत्तरस्मिन्प्रजापतिः ॥ देवानबूबुधन्मंत्रराजप्रणवमार्गतः ॥ १ ॥ मंत्रराजं पूर्वतापनीयं श्रुत्वा तदा धिया ॥ ध्यायंतः सगुणं ब्रह्म देवा धीशुद्धिमाप्नुवन् ॥२॥ ततस्ते निर्गुणं ब्रह्म पप्रच्छुः शुद्धबुद्धयः ॥ अणोरणीयान्यः प्रत्यङ् प्रणवे तं तदा प्रभो ॥३॥ परमाणोर्योगिनेत्रगम्यं रूपं यदस्ति तत् ॥ प्रतीचो नास्त्यतः

अत्यङ्गणीयान्परमाणुतः ॥४॥ ॐकारो वाचकस्तस्य प्रतीकं वेति हि श्रुतम् ॥ ॐकारेणात्मनो ध्यानं वदास्मभ्यं सविस्तरम् ॥५॥ श्रूयताम-यमोंकारो निःशेषजगदात्मकः ॥ इति ध्यात्वा ब्रह्म सर्वमात्मा ब्रह्मेति वै स्मरेत् ॥६॥ यदोंकारस्य सार्वात्म्यं ध्यानायैतन्न वस्तुतः ॥ यद्ब्रह्मणस्तु सार्वात्म्यं वस्तुतोऽप्येतदीक्ष्यताम् ॥७॥ ब्रह्म स्यात्स-च्चिदानंदरूपं सर्वेषु वस्तुषु ॥ विद्यंते सच्चिदानंदा इति ह्यूर्ध्वं प्रव-क्ष्यते ॥८॥ देहेंद्रियादिसाक्षी य आत्माऽस्मिन्ब्रह्मरूपताम् ॥ सच्चिदानंदरूपत्वादसंसारिणि युज्यते ॥९॥ देहाद्युपाधिसंबंधात्सं-सारित्वं चिदात्मनः ॥ स्वतः सोऽयमसंसारी ब्रह्मत्वं युज्यते ततः ॥१०॥ ॐमित्युच्चारयन् ध्याता स्वात्मानं ब्रह्मणा सह ॥ एकी-कृत्य पुनर्ब्रह्माप्येकीकुर्यात्तथात्मनः ॥११॥ तथा हंसः सोऽहमिति व्यतिहारोऽत्र लक्ष्यते ॥ विचिंत्यान्योऽन्यतादात्म्यं तथैवानुभवे-दिदम् ॥१२॥ बुद्धिस्तदाकृतिं कृत्वा यावन्नैश्चल्यमाप्नुयात् ॥ ताव-द्भवेदनुभवो जरामरणवर्जिते ॥१३॥ चलितानुभवाद्बुद्धिर्बहिश्चेद्गं-तुमुद्यता ॥ तदा बाह्यनिवृत्त्यर्थं कुर्यादारोपसंहृती ॥१४॥ स्थूलं सूक्ष्मं कारणं च शरीरत्रयमात्मनि ॥ माययाऽऽरोपितं ध्यात्वा बोधाल्ली-नमिति स्मरेत् ॥ १५ ॥ तदाऽप्योंकारमुच्चार्य नादांते निर्विकल्प-कम् ॥ चित्तं कृत्वा यथाशक्ति स्वात्मतत्त्वे स्थिरो भवेत् ॥ १६ ॥ निर्गते तु पुनश्चित्तेऽधिदैवाध्यात्मभेदतः ॥ यद्देहत्रयमस्त्येतदभेदेनैव चिंतयेत् ॥ १७ ॥ अंडसूत्राव्याकृताख्या देहाः स्युरधिदैवतम् ॥ पिंडालिंगाज्ञानरूपमध्यात्मं वपुषां त्रयम् ॥१८॥ स्थूलसूक्ष्मैक्यरूप-त्वमुभयत्र क्रमात्त्रिषु ॥ अस्ति साम्यमभेदोऽत उभयोरिह चिंत्यताम् ॥१९॥ विराड्ढिरण्यगर्भेशा अधिदैवं हि देहिनः ॥ विश्वश्च तैजसः

प्राज्ञो ह्यध्यात्ममपि देहिनः ॥२०॥ स्थूलसूक्ष्मानंदभुजः क्रमात्ते देहिनस्त्रयः ॥ एतत्सर्वं स्फुटीकर्तुं चतुष्पात्प्रविविच्यते ॥२१॥ इंद्रियैर्विषयज्ञानं यत्तज्जागरितं भवेत् ॥ तत्र स्थित्वा जगत्स्थूलं वेत्त्यात्मा तत्तदिंद्रियैः ॥२२॥ शिरश्चक्षुर्मुखं प्राणो मध्यं बस्तिस्ततोऽप्यधः ॥ इत्यंगसप्तकं वैश्वानरोपास्तिश्रुतौ श्रुतम् ॥२३॥ ज्ञानकर्मेंद्रियप्राणभेदाः पंचदशेरिताः ॥ चतुर्विधांतःकरणं मुख्यान्येकोनविंशतिः ॥२४॥ स्थूलमिंद्रियगम्यं यत्तद्भुंक्तेऽसौ चतुर्विधः ॥ जागरे जागरस्वप्नसुप्तितुर्याख्यभेदतः ॥२५॥ जागरो व्यवहारोऽक्षैः स्वप्नो मानसचिंतनम् ॥ तूष्णींस्थितिः सुषुप्तिः स्यात्तृप्तत्वं तुर्यमुच्यते ॥२६॥ अध्यात्ममधिदैवं च विश्ववैश्वानराभिधः ॥ ईदृशः प्रथमः पाद आत्मनः स्याच्चतुष्पदः ॥२७॥ इंद्रियाणामुपरमे धिया जागरवासनाम् ॥ सूक्ष्मां जानन्वासनात्मा सप्तांगादियुतो भवेत् ॥२८॥ स्पष्टस्मृतिरविस्पष्टस्मृतिरित्यपि ॥ स्वप्नभेदाः स्वप्नमध्ये जाग्रत्स्वप्नसुषुप्तयः ॥२९॥ स्वप्नेऽपि तुर्यं तृप्तत्वं जाग्रतीवानुभूयते ॥ हिरण्यगर्भोऽधिदैवमध्यात्मं तैजसाभिधः ॥३०॥ द्वितीयः पाद एव स्यादात्मनोऽस्य चतुष्पदः ॥ धियो लये सुषुप्तिस्थ एकोऽभूद्द्वैतलोपनात् ॥३१॥ धीवृत्तिरूपाः प्रज्ञास्ता एकीभावमुपागताः ॥ दुःखहान्यानंदमयो भुंक्ते ब्रह्मसुखं तदा ॥३२॥ अविद्यावृत्त्यवच्छिन्नं चैतन्यं भोगसाधनम् ॥ सुषुप्तौ चतुरात्मत्वं जागरादिविभेदतः ॥३३॥ तंद्रामध्यापयेद्वाचा तदा स्यात्सुप्तिजागरः ॥ ध्यानाभ्यासस्तु यस्तंद्र्यां सुप्तिः स्वप्नः स उच्यते ॥३४॥ गाढनिद्रः सुप्तसुप्तिः सुप्तितुर्यं सुखोद्भवः ॥ अध्यात्मं प्राज्ञ एवं स्यादधिदैवं तथेश्वरः ॥३५॥ तृतीयः पाद इत्युक्त आत्मनोऽस्य चतुष्पदः ॥ पादत्रय-

मिदं मायामात्रं स्यान्न तु तात्त्विकम् ॥३६॥ सुषुप्तिस्वप्ननामभ्यां तत्त्वविद्वक्ति तत्त्रयम् ॥ तत्त्वावृते सुप्तसुप्तं स्वप्नता त्वन्यथेक्षणात् ॥३७॥ पादत्रयेणावृताऽसौ चिदेकरसताऽऽत्मनः ॥ अथ पादश्च-तुर्थो यश्चतुरात्मा स पूर्ववत् ॥३८॥ तुरीयाऽवसितत्वं तु भवेत्पा-दचतुष्टये ॥ ओताऽनुज्ञात्रनुज्ञाविकल्पशब्दैरुदीरिताः ॥३९॥ तुरीय-पादगा भेदास्तत्स्वरूपं विविच्यते ॥ ब्रह्मणो गुरुशास्त्राभ्यां बुद्ध्वा सर्वात्मतां ततः ॥४०॥ सर्ववस्तुष्वनुस्यूतं पश्यन्नोता भवेद्यम् ॥ इंद्रियाणि निरुध्याहं ब्रह्मेति ब्रह्मतात्मनि ॥४१॥ येनानुज्ञायते सोऽयमनुज्ञातेति कथ्यते ॥ ज्ञातृत्वं तु निराकृत्य चिदेकरसशेषता ॥४२॥ अनुज्ञेत्युच्यते मुक्तिरविकल्प इतीर्यते ॥ विद्वज्जागरणस्व-प्नसुप्तितुर्याऽभिधा इमाः ॥४३॥ अवस्थास्तिस्र एतास्तु मायालेशेन संयुताः ॥ निःशेषमायाहीनोऽयमविकल्पो भवत्यथ ॥४४॥ अत-द्व्यावृत्तिरूपेण तस्यादेशोऽत्र वर्ण्यते ॥ जाग्रत्स्वप्नांतरालानि विद्या-विद्ये सुषुप्तकम् ॥४५॥ न स्थूलप्रज्ञमित्याद्यैः क्रमात्षड्भिर्निवार्यते ॥ न चक्षुरादिभिर्दृश्यैर्न प्राणैर्व्यवहारभाक् ॥४६॥ नापि कर्मेंद्रियै-र्ग्राह्यं नानुमेयं च लक्षणात् ॥ न चिंत्यं मनसा नैव शब्दैश्च व्यप-दिश्यते ॥४७॥ स्वप्रकाशात्मसारत्वान्नापि शक्याऽस्य शून्यता ॥ स्थूलप्रज्ञादिरूपो यः प्रपंचः स्वात्मनः पृथक् ॥४८॥ तत्कृतैर्बहु-विक्षेपैरात्मनो दुःखितेति चेत् ॥ प्रपंचः कल्पितस्तत्त्वबोधेनैवोप-शाम्यति ॥४९॥ ततः शिवं दुःखहीनं सर्वविक्षेपशांतितः ॥ पादं

---

१ अथायमादेशो न स्थूलप्रज्ञं न सूक्ष्मप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञं नाप्रज्ञं न प्रज्ञान-घनमदृष्टमव्यवहार्यमलक्षणमलिंगमचिंत्यमव्यपदेश्यमेकात्म्यप्रत्ययसारं प्रपंचोपशमं शांतं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः ।

चतुर्थं मन्यंते वस्त्वद्वैतमिहोच्यते ॥५०॥ मतिरेव बुभुत्सूनां न त्वद्वैते चतुर्थता ॥ यदद्वैतं स एवात्मा ज्ञेयो जिज्ञासुना स हि ॥५१॥ तुर्यपादे त्रयं त्यक्त्वा तुर्ये तुर्योऽवबुध्यताम् ॥ मायित्वादीश्वरोऽप्यत्र ग्रस्तः स्यादवबोधतः ॥५२॥ इत्थं योगविवेकौ द्वौ प्रथमे खंड ईरितौ ॥ चित्तभ्रमणरूपस्य संसारस्य प्रशांतये ॥५३॥ योगो विवेक इत्युक्तौ प्रकारौ श्रुतिसंमतौ ॥ असाध्यः कस्यचिद्योगः कस्यचिज्ज्ञाननिश्चयः ॥५४॥ प्रकारौ द्वौ ततः प्रोक्तौ सर्वानुग्रहकाम्यया ॥ आदौ द्वितीयखंडस्य सच्चिदानंदतात्मनः ॥५५॥ विविच्यते नित्यसत्ता गम्यते ह्यनुवृत्तितः ॥ व्यभिचारे जागरादेर्यत्सदव्यभिचारि तत् ॥ ५६ ॥ आनंदैकरसं नित्यमिति सत्त्वं विवेचितम् ॥ चक्षुःश्रोत्रादयः सर्वे मदीया इति भासिताः ॥५७॥ भाताऽसौ चक्षुरादिभ्यो द्रष्टाऽन्यश्चेतनो भवेत् ॥ द्रष्टेति दृष्टिकर्तृत्वमहंकारेण कंल्पितम् ॥५८॥ दृङ्मात्रत्वेन साक्ष्यात्मा विकाररहितत्वतः ॥ आनंदघन आत्माऽसौ परप्रेमास्पदत्वतः ॥५९॥ मा न भूवं सदा सम्यग्भूयासमिति हीक्ष्यते ॥ सच्चिदानंदैकरसो भात्यस्माद्दृश्यतः पुरा ॥६०॥ सर्वेषु व्यवहारेषु निर्विकल्पं स्फुरेत्पुरः ॥ तमेष भांतमन्वेति तद्भासा भास्यते जगत् ॥६१॥ इति श्रुत्यंतरे प्रोक्तः परमात्मा

---

१ तं वा एतमात्मानं जाग्रत्यसुप्तमसुषुप्ते जाग्रतमसुषुप्तं सुषुप्ते जाग्रतमस्वप्नं तुर्येऽजाग्रतं स्वप्नमव्यभिचारिणं नित्यानंदसदैकरसं ह्येव चक्षुषो द्रष्टा श्रोत्रस्य द्रष्टा वाचो द्रष्टा मनसो द्रष्टा बुद्धेर्द्रष्टा प्राणस्य द्रष्टा तमसो द्रष्टा सर्वस्य द्रष्टा ततः सर्वस्मादन्यो विलक्षणश्चक्षुषः साक्षी श्रोत्रस्य साक्षी वाचो मनसः साक्षी बुद्धेः साक्षी प्राणस्य साक्षी तमसः साक्षी सर्वस्य साक्षी ततोऽविक्रियो महाचैतन्योऽस्मात्सर्वस्मात्प्रियतमानंदघनं ह्येवमस्मात्सर्वस्मात्पुरतः सविभातमेकरसमेवाजरममृतमभयं ब्रह्मैव ।

पुरा स्फुरन् ॥ अखंडैकरसः सोऽयं जरामरणवर्जितः ॥६२॥ इत्यात्मानं विविच्याथ युंजीत प्रणवेन तम् ॥ चतुर्णां जागरादीनां प्रत्येकं चतुरात्मता॥६३॥ पूर्वमुक्ता यथा तद्वदकारादिषु कल्पयेत्॥ आधारादुत्थितो वायुर्नाभिहृत्कंठगो बहिः ॥ ६४ ॥ निर्गच्छन् जनयेच्छब्दं सोऽपि स्थानैश्चतुर्विधः ॥ संज्ञाः परेति पश्यंती मध्यमा वैखरीति च ॥६५॥ आगमोक्ता वैखरी तु श्रूयते मुखनिर्गता ॥ वाचः पदानि चत्वारि त्रीणि गूढानि विग्रहे ॥६६॥ तुर्यं मर्त्या वदंतीति प्राह मंत्रोऽप्यतिस्फुटम् ॥ वैखर्याद्याः परांतास्तु शब्दभेदाः क्रमादमी ॥६७॥ स्थूलसूक्ष्मौ बीजसाक्षिणावित्येव श्रुतीरिताः ॥ निवृत्तिश्च प्रतिष्ठा च विद्या शांतिश्च वै कलाः ॥६८॥ अकारेऽस्मिंश्चतुर्भेदे जागरं तु चतुर्विधम् ॥ ध्यायेत्साम्यं तयोराप्तिरादित्वं चेति चिंतयेत् ॥६९॥ जागरेऽक्षैर्व्याप्तिरस्ति व्याप्तोऽकारः कखादिषु ॥ आदित्वं लोकतः सिद्धं जागराकारयोर्द्वयोः ॥७०॥ स्थूलसूक्ष्मत्वादिसाम्यं तद्भेदानां क्रमाद्भवेत् ॥ फलं यथागुणं ध्याने भवेत्सर्वत्र कामिनः ॥७१॥ अकारं जागरोऽप्येतमुकारे संहरेत्तथा ॥ उकारं च मकारे तमोंकारे नादरूपिणि ॥७२॥ अथ तुर्यं चतुर्भेदमीशग्रासादिनामकम् ॥ ध्यायेन्महेश्वरोऽमायी यस्तमोऽतो ग्रसत्ययम् ॥७३॥ कालाग्निसूर्यः संहारकाले स्वैस्तीव्ररश्मिभिः ॥ तिरस्कुर्याज्जगत्तत्तु लेशाद्भाति यथातथा ॥७४॥ ओतोऽयं सच्चिदानंदैर्नामरूपे जगद्गते ॥ तिरस्कुर्यात्ते तु लेशमात्रे भातः क्वचित्क्वचित् ॥७५॥ यथा सूर्यस्तमः सर्वं प्रकाशीकुरुते तथा ॥ अनुज्ञाता जगत्सर्वं स्वात्ममात्रं करोति हि ॥७६॥ दाह्यं दग्ध्वा यथा वह्निर्निर्व्यापारोऽवशिष्यते ॥ अनुज्ञैकरसस्तद्वच्चिन्मात्रः परिशिष्यते ॥७७॥ अवाङ्मनसगम्योऽयमवि-

कल्पश्चतुर्विधः ॥ तुर्यपादं चतुर्भेदे नादे[1] संचिंतयेत्क्रमात् ॥७८॥ सर्वस्य जगतो वस्तु तत्त्वं यन्निर्विकल्पकम् ॥ तदात्मेति समाधाय चित्तं तस्मिन्भवेद्धि तत् ॥७९॥ अथवा मंत्रराजे धीः समाधेयात्मवाचिनि ॥ सर्वसंहारशक्त्याद्या अर्था उग्रादिशब्दगाः ॥८०॥ आत्मानं मंत्रराजेन ध्यायन्ब्रह्मतया पुमान् ॥ ब्रह्मरूपो नृसिंहः स्याद्योगः शुद्धधियो ह्यहम् ॥८१॥ विवेकयोगौ संप्रोक्तौ द्वितीये खंड आत्मनः ॥ प्रणवे मंत्रराजे च द्विविधो योग ईरितः ॥८२॥ तृतीयमंत्रराजस्य प्रणवस्यात्मनोऽपि च ॥ एकीकारेण यद्ध्यानं तत्सम्यगभिधियते ॥८३॥ पृथिव्याद्यात्मकोंकारः पाद उग्रादिकोऽपि च ॥ परापश्यंत्यादिरूपः सोऽयं विश्वश्चतुर्विधः ॥८४॥ तैजसप्राज्ञतुर्याश्च तथा ध्यात्वोपसंहरेत् ॥ असौ प्रपंचहीनः स्यादविकल्पे स्थिरः पुमान् ॥८५॥ ज्ञप्तिमात्रोऽमृतो नित्यो हुतसंविद्वृत्तिकः ॥ शुद्धो भ्रांतिविहीनत्वात्संविष्टोऽयमविक्रियः ॥८६॥ प्राणायामेन निर्विघ्नोऽनुभवेदीदृशात्मताम् ॥ प्राणाधीनां मनोवृत्तिः प्राणरोधेन शाम्यति ॥८७॥ निर्विकल्पधिया पश्येज्जगत्स्वात्मतया तदा ॥ ध्याने प्रपंचं संत्यज्य ब्रह्मरूपेण तिष्ठति ॥८८॥ अन्यो देवोऽहमप्यन्य इति द्वैतस्य वासना ॥ दृढा चेत्तादृशी देवपूजोपास्तिरथोच्यते ॥८९॥ योऽस्मिन्खंडे वर्णितोऽसौ संकल्पः पूज्य इष्यते ॥ षट् तु स्थानानि देहेऽस्मिन्पूजाधाराः प्रकीर्तिताः ॥९०॥ आधारनाभिहृदयभ्रूमध्यद्वादशांतकाः ॥ षोडशांतश्च तेऽष्वग्निब्रह्माद्यानर्चयेत्क्रमात् ॥९१॥ यश्चतुर्भेद ओताद्यैः सोऽमृतो निरुपाधिकः ॥ उपाधीनां बोधबाधादविकल्पोऽवशेषणात् ॥९२॥ सोऽवि-

[1] ॐकारे ।

कल्पः सर्वमयस्तस्मिन्सर्वाधिरोपणात् ॥ ये जागरादयो भेदाश्चत्वारस्तेऽत्र कल्पिताः ॥९३॥ परिवारा मंत्रराजे माहाचक्रे प्रकीर्तिताः ॥ पृथिव्याद्याः सप्तसप्त भेदा मात्रास्त्विह श्रुताः ॥९४॥ परिवारेण संयुक्तं चतुःसप्तात्मकं प्रभुम् ॥ नृसिंहमग्निरूपं तं मूलाधारे विचिंतयेत् ॥९५॥ भूम्यादिभिः सप्तविधं स्थूलाद्यैश्च चतुर्विधम् ॥ अकाररूपं ब्रह्माणमेतं नाभौ विचिंत्येत् ॥९६॥ हृदि विष्णुमुकारेण भ्रूमध्ये च मकारतः ॥ रुद्रं नादेन सर्वेशं द्वादशांतेऽग्निवत्स्मरेत् ॥९७॥ चतुःसप्तात्मकोऽमायी सर्वेशो ह्यनुपाधिकः ॥ षोडशांते सुखं ध्यायेच्चतुःसप्तात्मलक्षितम् ॥९८॥ तेनानंदामृतेनाधःस्थितास्ताः पंच देवताः ॥ व्याप्ताश्चतुर्विधाः स्थूलादिभिरित्येव चिंतयेत् ॥९९॥ उपचारैरागमोक्तैर्देवास्तान्मनसार्चयेत् ॥ ब्रह्मादिमूर्तिभेदेन तथैक्येनापि पूजयेत् ॥१००॥ भक्ष्यभोज्यैर्लेह्यचोष्यैरित्येतैरुपहारयेत् ॥ गुरुश्रुत्युक्तमार्गेण पूजयित्वा यथाविधि ॥१॥ मूर्तिं तेजसि संहृत्य तेजश्चात्मनि संहरेत् ॥ सूत्रे विराजं संहृत्य सूत्रमव्याकृते च तत् ॥२॥ अविकल्पे तत्र चित्तं समाधाय स्थिरो भव ॥ पूज्यपूजकयोर्भेदवासना यस्य हीयते ॥३॥ चतुर्थखंडे योगोऽस्य धीविश्रांत्यै निगद्यते ॥ नादस्तुरीय ॐकारस्तस्यांते स्फुरदद्वयम् ॥४॥ मंत्रराजेन साम्यं तैः पादैर्नत्वा प्रसादयेत् ॥ प्रणवात्मतया ध्यात्वाऽहमित्यात्मतया स्मरेत् ॥५॥ यावन्निश्चलता तावत्स्थित्वोर्ध्वं चिंतयेत्पुनः ॥ कृत्स्नमंत्रेण नत्वोमित्युच्चार्यांते स्थिरो भवेत् ॥६॥ ध्यात्वोंकारं पुनर्मंत्रान्महावाक्यादनुस्मरेत् ॥ मंत्रेण वा केवलेन नृसिंहेति पदेन वा ॥७॥ संस्मृत्याखंडवाक्यार्थं युंजीतोंकारमंत्रयोः ॥ संस्तभ्य चित्ते स्वात्मानं गुणत्रयविवर्जितम् ॥८॥ ब्रह्मादिकानकाराद्यैः संयो-

न्यात्मनि संहरेत् ॥ तेषां तु कारणाविद्यां बाधित्वा वस्तुतोऽसतीम् ॥९॥ कृत्वा चिद्भक्षितां वीरः संस्मरन्निर्भयो भवेत् ॥ ब्रह्मादीन्मंत्रराजस्य पादैश्चिद्रूपतां नयेत् ॥१०॥ अविद्याविनिवर्त्येष नृसिंहः स्वयमुद्बभौ ॥ योगांतरं पंचमेऽस्मिन् षष्ठे स्पष्टमुदीर्यते ॥११॥ अकारार्थे मंत्रराजपदार्थैर्योजयेत्क्रमात् ॥ चतुर्मूर्त्यात्मकैर्योगैरविकल्पांतकैरपि ॥१२॥ चतुर्दशभिरेकेनाप्यजस्रं प्रयतो वसेत् ॥ उग्रे वीरे महाविष्णावुज्वले सर्वतोमुखे ॥१३॥ नृसिंहे भीषणे भद्रे मृत्युमृत्यौ न मय्यजा ॥ भाति हिंसाकरी माया न मय्यस्ति चिदात्मनि ॥१४॥ नमामीति पदाद्ब्रह्माभिन्नतामनुचिंतयेत् ॥ ईदृग्योगी स्याद[1]काम: काम्यमस्य न संभवेत् ॥१५॥ निष्कामोऽसौ लौकिकानां कामानां विनिवृत्तितः ॥ काम्य आत्माऽपि बोधाप्तः किमन्यत्काम्यते पुनः ॥१६॥ उत्क्रामंति न तत्प्राणा लीयंते तु परात्मनि ॥ ब्रह्मैव सन्पुराप्येष ब्रह्माप्नोत्यवबोधतः ॥१७॥ तथोंकारमकारं च योज्यौ मंत्रपदेष्वतः ॥ अस्मिन्खंडे त्रयो योगा धीविश्रांत्यै प्रकीर्तिताः ॥१८॥ षष्ठे खंडेऽथ विद्यायाः साधनान्यखिलान्यपि ॥ जीवन्मुक्त्यवसायीनि संगृह्यंते ह्यतिस्फुटम् ॥१९॥ विषयासंगरूपो यः पाप्मासावासुरत्वतः ॥ विद्येच्छां प्रतिबध्नाति सोऽयमादौ निवर्त्यताम् ॥२०॥ रजस्तमोवृत्तयो या लोभमोहादयो हृदि ॥ क्रूरत्वादसुरास्ते स्युर्देवाः स्युः सत्त्ववृत्तयः ॥२१॥ सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च ॥ प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥२२॥ अर्थावुग्रादिशब्दानां यौ प्रोक्तौ तापनी-

---

१ आत्मैव नृसिंहो देवो ब्रह्म भवति य एवं वेद सोऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामंत्यत्रैव समवलीयंते ब्रह्मैव सन्ब्रह्माप्येति ।

ययोः ॥ सगुणागुणभेदेन तद्ध्यानादसुरान् जयेत् ॥२३॥ त्यक्त्वा रजस्तमोवृत्ती सात्विकीं वृत्तिमाश्रिता ॥ धीश्चिदानंदमात्मानं ध्यायंती तन्मयी भवेत् ॥२४॥ ततो ध्यातृध्येयभेदनिवृत्त्यै मंत्र-राजतः ॥ तुर्यातुर्यमनुस्मृत्य समाधिः प्रणवे भवेत् ॥२५॥ मंत्रार्थे प्रणवं दीर्घमुक्त्वा चित्तं विलापयेत् ॥ अमूर्तमद्वयं ब्रह्मानुभवन्वर्तते तदा ॥२६॥ ईदृक् समाधिविघ्नानां शांत्यै पुत्रैषणादिकम् ॥ त्यक्त्वा चित्तं समाधाय जीवन्मुक्तः सुखी भवेत् ॥२७॥ अकारादिषडंगेषु संयोज्यासंगमद्वयम् ॥ मंत्रार्थमपि संयोज्य ह्यकारादीनुपेक्षते ॥२८॥ खंडेऽथ सप्तमे योगाः प्रवक्ष्यंते पुनस्त्रयः ॥ तेषामन्यतमेनाऽसौ विद्वान्कालं नयेत्पुमान् ॥२९॥ अकारार्थमजत्वाद्यैश्चिंतयेद्बुद्धिसा-क्षिणम् ॥ उत्कर्षाद्यैरुकारार्थं मंत्रदेवं विचिंतयेत् ॥३०॥ अनूद्य साक्षिणं प्रोक्तं मंत्रदेवत्वमस्य तत् ॥ उत्कृष्टत्वादिभिः शब्दैः पंच-भिश्चिंतयेत्तथा ॥३१॥ उत्तरैः पंचभिर्देवमनूद्य परमात्मताम् ॥ मह-त्वाद्यैर्मकारार्थरूपं तस्य विचिंतयेत् ॥३२॥ शरीरत्रयहीनो यः सच्चिदानंदलक्षणः ॥ स एव भवति ध्यानाद्योगोऽयं प्रथमो भवेत् ॥३३॥ अन्येन कस्त्वमित्येवं पृष्टाः सर्वेऽपि मानवाः ॥ अहमित्या-हुरेतेषामहमित्यभिधानतः ॥३४॥ अहंशब्दे प्रत्यगात्मवाचिन्यादेर-कारतः ॥ प्रथमे प्रथमाद्वर्णादात्मानमनुचिंतयेत् ॥३५॥ ब्रह्मणः

---

१ सज्योतिरस्य सर्वस्य पुरतः सुभातमविभातमद्वैतमचिंत्यमलिंगं स्वप्रकाशं परमेव ब्रह्म भवति । ते देवाः पुत्रैषणाया लोकैषणायाश्च ससाधनेभ्यो व्युत्थाय निरहंकारा नीरागा निष्परिग्रहा अशिखा अयज्ञोपवीता अंधा बधिरा मुग्धाः क्लीबा मूका उन्मत्ता इव परिवर्तमानाः शांता दांता उपरतास्तितिक्षवः समाहिता आत्मरतय आत्मक्रीडा आत्ममिथुना आत्मानंदाः प्रणवमेव परं ब्रह्मात्मप्रकाशं शून्यं जानंतस्तत्रैव परिसमाप्ताः ।

सच्चिदानंदा वीक्ष्यंते सर्ववस्तुषु ॥ तस्मात्सर्वात्मकं ब्रह्म मकारो ब्रह्मशब्दगः ॥३६॥ मकारः प्रणवस्यांते यस्तेन ब्रह्म विंतयेत् ॥ आत्मनो ब्रह्मणैकत्वमुकारेण विचिंतयेत् ॥३७॥ आत्मा ब्रह्मेति वाक्यार्थे योगोऽयं प्रणवे श्रुतः ॥ अर्थे तत्त्वमसीत्यस्य योगोऽथ प्रणवे भवेत् ॥३८॥ सर्वात्मकं ब्रह्म यत्स्यादुआदिपदभाषितम् ॥ संहारे जगदत्तृत्वात्तस्योकारार्थतोचिता ॥३९॥ संहृते जगति ब्रह्म सततं ह्यवतिष्ठते ॥ पुनरुआदिशब्दैस्तदखंडत्वेन संस्मरेत् ॥४०॥ साक्षिणं मन आदीनामात्मानं तु मकारतः ॥ ध्यात्वा ब्रह्मत्वसंपत्त्यै दृष्टिसृष्टिमनुस्मरेत् ॥४१॥ ब्रह्मात्मनोस्तु समयोरैक्यं ध्यायेदुकारतः ॥ फलं तु पूर्ववद्विद्यात्रयो योगा इतीरिताः ॥४२॥ चत्वारो ह्यष्टमे खंडे योगास्तुर्यस्य भासकाः ॥ ॐकारनामा प्रणवे नादो यस्तत्र वर्णिताः ॥४३॥ ओतानुज्ञात्रनुज्ञातैरविकल्प इतीरितैः ॥ भेदैर्योगा विभिन्नाः स्युरभयं ब्रह्म तैर्भवेत् ॥४४॥ ॐकारमंत्रयोर्ध्येयं वस्तु यद्बहुधेरितम् ॥ तत्तत्त्वं नवमे खंडे विस्पष्टं प्रविविच्यते ॥४५॥ य आत्मा ध्यातृदेहेषु यश्च ध्येयेषु भासते ॥ एक एव स चिद्रूपो मायया भात्यनेकवत् ॥४६॥ सुषुप्तौ जीवचैतन्यमद्वयं ब्रह्मतां व्रजेत् ॥ जगत्सर्वमविद्येति सर्वैरप्यनुभूयते ॥४७॥ सृष्टेः प्रागप्येवमासीत्सा माया वटबीजवत् ॥ अनेकरूपतां प्राप्य जीवेशावपि निर्ममे ॥४८॥ कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ॥ उपाध्योर्यौ चिदाभासौ तौ जीवेशावुदीरितौ ॥४९॥ नियंतेशोऽनुमंता तु जीवः सोऽपि द्विधा भवेत् ॥ समष्टिव्यष्टिरित्याद्यैस्तयोः सर्वाभिमानवान् ॥५०॥ हिरण्यगर्भः सूत्रात्मा त्रिमूर्तिश्चेत्युदीर्यते ॥ ब्रह्मा विष्णुश्च रुद्रश्च मूर्तयो गुणभेदतः ॥५१॥ लिंगो-

पाधित्वतो जीवा अपीशाः सर्वविस्त्वतः ॥ समष्टिः समुदायात्मा व्यष्टिस्तु पृथगात्मवान् ॥५२॥ समष्टिः सूत्रवज्ज्ञेयो ब्रह्मांडाख्यवपुर्विराट् ॥ देवतिर्यङ्मनुष्यादिदेहो व्यष्टिरितीर्यते ॥५३॥ परः प्रविश्य देहेषु मायया गूढवत्स्थितः ॥ द्वैतस्य मायिकत्वेन तत्त्वमद्वैतमिष्यताम् ॥५४॥ सन्मात्रो नित्य इत्यादि श्रुत्या तत्तु स्फुटीकृतम् ॥ अथर्वणे तु कैवल्यप्रमुखाः श्रुतयः स्फुटाः ॥५५॥ श्रुतिस्मृतीतिहासानामभिप्रायविदव्ययः ॥ श्रुतिव्याख्यानतस्तुष्याद्विद्यातीर्थमहेश्वरः ॥१५६॥ इति श्रीविद्यारण्यविरचिते अनुभूतिप्रकाशे देवविद्याख्यो नृसिंहतापिनीविवरणो नाम विंशोऽध्यायः ॥ २० ॥

॥ ॐतत्सद्ब्रह्मार्पणमस्तु ॥ श्रीरस्तु ॥

---

श्रीऋग्वेदादिचतुर्वेदव्याख्यात्रा श्रीमद्विद्यारण्यस्वामिना विरचितोऽनेकोपनिषदर्थसंग्रहरूपोऽयमनुभूतिप्रकाशाख्यो ग्रंथः मुंबापुर्यां निर्णयसागराख्यमुद्रणालयाधिपतिना, ब्रह्मविद्वरिष्ठविद्वद्वर्यपीतांबराख्यविदुषां सूचनया सुज्ञ—सालेमहंमदात्मजसरीफसंज्ञकस्य साहाय्येन संगृहीतः। स च ब्रह्मविद्वरिष्ठविद्वद्वर्यजीवनरामात्मजजयकृष्णाख्यपंडितानां पुस्तकसंग्रहस्थपुस्तकाधारेण, भावनगराधिराजमहामात्यपदवीं पूर्वं स्वीकर्तॄणां श्रीमदुदयरामतनुजनुषां श्रीगौरीशंकराभिधसज्जनानां ग्रंथसंग्रहे स्थितमस्य सुशुद्धं पुस्तकमानीय तदाधारेण च संशोधितः। स एव शके १८४८ वत्सरे सन १९२६ ख्रीस्तेऽब्दे स्वकीयमुद्रणालये मुद्रयित्वा प्राकाश्यं नीतः। स च मुमुक्षूणां मोक्षदो भूयात् ॥

अनुभूतिप्रकाशोऽयं विठ्ठलेन विशोधितः ॥
यदत्र न्यूनमधिकं क्षंतव्यं तन्मनीषिभिः ॥ १ ॥

# विक्रेयपुस्तकानि.

## संस्कृत–वेदान्तग्रन्थः.

# अद्वैतसिद्धिः ।

### श्रीमत्परमहंसमधुसूदनसरस्वतीप्रणीता ।

विट्ठलेशीयव्याख्योपबृंहित—गौडब्रह्मानन्दीव्याख्यासहिता तथा बलभद्रप्रणीतसिद्धिव्याख्यया–अनन्तकृष्णशास्त्रिसंगृहीतन्यायामृताऽद्वैतसिद्धितरंगिणीलघुचन्द्रिकासंग्रहात्मकचतुर्ग्रन्थ्योपस्कृता च ।

मूल्यम् १० रु., मा. व्य. १ रु.

### श्रीमच्छंकराचार्यकृत—

### १ रत्नपञ्चकं ( सोपानपञ्चकं ) सभाष्यं,

२ विद्वदनुभवानन्दलहरी ( शिवानन्दलहरी ), ३ शतश्लोकीसारसंग्रहः, ४ कौपीनपञ्चकं, ५ एकोविष्णुरितिपद्यस्य श्रीनिवासकृतव्याख्यानं.

इति पञ्चानामपूर्वाणां विषयाणां संग्रहः मू. ३ आ., मा. १॥ आ.

| | | | | |
|---|---|---|---|---|
| रामगीता रामगीतामाहात्म्यञ्च. ... | ० | १ | ० | १ |
| लघुयोगवासिष्ठः–आत्मसुखकृतः, वासिष्ठचन्द्रिकाटीकासहितः | ५ | ० | १ | ० |
| ललितासहस्रनाम—भास्कररायप्रणीतं, सौभाग्यभास्करभाष्यसहितं च ... ... ... | १ | १२ | ० | ४ |
| वेदस्तुतिः—( श्रीमद्भागवतगता ) लोकेव्यवायेतिश्लोकः, जन्माद्यस्येतिश्लोकश्च, काशीनाथोपाध्यायकृतव्याख्योपबृंहितश्रीधरीव्याख्या. ... ... ... | ० | १२ | ० | ४ |
| वेदांतसारः—नृसिंहसरस्वतीस्वामिकृतः, सुबोधिनी, रामतीर्थविरचित–विद्वन्मनोरंजनीटीकासहितश्च— जे. ई. जेकब इत्येतैः विविधपाठान्तरैराङ्ग्लटिप्पन्यादिभिः संकलितः. ... ... ... ... | १ | ४ | ० | ४ |
| शिवगीता— ... ... ... | ० | ८ | ० | २ |
| शिवगीता— ... ... ... | ० | १२ | ० | २ |

| | | | | |
|---|---|---|---|---|
| शिवगीता—लक्ष्मीनरहरिसूनुकृत–बालानंदिनीव्याख्यासहिता. | ० | ८ | ० | २ |
| अद्वैतसिद्धिः—मिथ्यात्वमिथ्यात्वान्तो भागः. | २ | ८ | ० | ८ |
| अद्वैतरत्नरक्षणं—मधुसूदनीयं. | ० | १० | ० | ४ |
| अनुभूतिप्रकाशः—विद्यारण्यस्वामिकृतः. | १ | ० | ० | ४ |
| अष्टाविंशत्युपनिषदः—( गुटिका, उपनिषदः २८ ). | १ | ४ | ० | ३ |
| अष्टोत्तरशतोपनिषदः. | ३ | ० | ० | १२ |
| अवधूतगीता—पत्रबद्धा. | ० | ४ | ० | १ |
| अवधूतगीता—कौशेयबद्धा. | ० | ६ | ० | १ |
| उपदेशसाहस्री—( गद्यपद्योभयभागात्मिका ) अद्वैतवेदान्तविलसितः सर्वोत्कृष्टोऽयं निबन्धः श्रीमद्भगवत्पादाचार्यप्रणीतो विराजतीति । असकृदेनं परिशीलयतामद्वैतवेदान्तज्ञानं सुखावबोधं स्यात् । अस्य प्रथमं गद्यभागः–पद्यभागश्च पृथङ्मुद्रितावास्ताम् । सांप्रतं ग्राहकसौकर्यायैकत्रैवोभयं मुद्रितमस्ति. | १ | ८ | ० | ८ |
| तत्त्वप्रदीपिका–चित्सुखी—श्रीमच्चित्सुखाचार्यमुनिविरचिता, परमहंसप्रत्यग्रूपभगवत्प्रणीतया नयनप्रसादिनीव्याख्यया सहिता. | ३ | २ | ० | १२ |
| पञ्चदशी—विद्यारण्यकृता, रामकृष्णविरचितटीकासहिता. | १ | ० | ० | ४ |
| पंचरत्नगीता—भगवद्गीता–विष्णुसहस्रनाम–भीष्मस्तवराज–अनुस्मृति–गजेंद्रमोक्षसहिता (कौशेयबद्धा) स्थूलाक्षरा. | १ | ८ | ० | ६ |
| पंचरत्नगीता—कौशेयबद्धा, मध्याक्षरा. ३२ पे. | १ | ० | ० | २ |
| पंचरत्नगीता—पत्रबद्धा, मध्यमाक्षरा. ३२ पे. | ० | १२ | ० | २ |
| पंचरत्नगीता—पट्टबद्धा, सूक्ष्माक्षरा. ६४ पे. | ० | ८ | ० | २ |
| पांडवगीता. | ० | १ | ० | १ |
| पातञ्जलयोगसूत्रं—भावागणेशवृत्ति–नागोजीभट्टीयवृत्तिसहितं. | ० | १२ | ० | ४ |

पाण्डुरङ्ग जावजी

निर्णयसागराध्यक्षः.